स्तनेरमा यत्र कपोलपाली
भृङ्गावलीलीलमलं वहन्ति ॥ १६ ॥
निसर्गलावण्यमये कपोले
भामोः कला एव न पार्थिवानाम् ।
स्नेह यथूनां जनयति यत्र
मुक्तावलीसन्निभसन्निवेशम् ॥ १७ ॥
मार्दवमङ्गेऽपि हृदे पवित्रा
वक्रत्वमात्रोऽपि निसर्गसत्यः ।
सेव्या द्विजैर्यैरपि शुभ्रपक्षै—
स्तथाप्यगम्याः सरितो विभान्ति ॥ १८ ॥
सीमन्तिनीकान्तकपोलकान्ति—
लावण्यसर्वस्वपराजयेन ।
अद्यापि यस्मै मलिनत्वमस्त—
मब्जः समुन्मूलयितेव यत्र ॥ १९ ॥
यत्र प्रवेशाः सुरसुन्दरीणां
चेतांसि रम्या रमयांबभूवुः ।
मनोज्ञरूपा गुणिनो मनांसि
कुर्वन्ति वश्यानि किमत्र चित्रम् ॥ २० ॥
मित्रं समो हारि यशो विभूषा
त्यागो विनोदः करुणा कलत्रम् ।
शास्त्रं गुरुर्बन्धुजनोऽपि धैर्यं
धर्मो धनं यत्र सदा जनानाम् ॥ २१ ॥
तत्रास्ति चामीकररत्नहर्म्या
श्रीनिर्मिता स्वर्गपुरीव रम्या ।
हरेः पदं द्वारवतीति नाम्ना
पुरी परीता निमिषामयेन ॥ २२ ॥

ममोचितमानो मनुजा समतो
    नृपाधिपैर्जातिबलावलिप्तैः ॥ ५२ ॥
मनोरथानामधिकं विलोक्य
    स्वार्थं पदीप जगते हिताय ।
कल्पद्रुमैर्मीलितया विलिल्ये
    तथा यथाद्यापि न जन्मलाभः ॥ ५३ ॥
भैमस्यमा पृथगुणात्मदीयां
    पद्मेति नाम्ना सहितां चकार ।
इतीव कोपात्सु मृगच्छलेन
    धत्ते मृगाङ्को मलिनं शरीरम् ॥ ५४ ॥
निपीडिता नूपुरकैरसंख्यैः
    प्रत्यागकाङ्क्षेव समस्तशक्तिः ।
विस्तंभया भूरिरजच्छलेन
    विश्रामहेतोर्विभरावरोह ॥ ५५ ॥
नदीनजाता न चलस्वभावा
    न निम्नगा वा न कलङ्कितापि ।
जगाद्यया नैव च सत्यभामा
    मार्गामवत्सस्य पराजितश्रीः ॥ ५६ ॥
मृगाङ्गनां सा च विलोकितेन
    गिरान्यपुष्टां शशिनं मुखेन ।
गतेन हंसीं चमरीं सुकेशैः
    सार्धं विजिग्ये पृथुचञ्चलाता ॥ ५७ ॥
लक्ष्मीस्तथा वारिजनाम भाव-
    मितीव बुद्धिं मनसो विधातुम् ।
पादद्वयस्यामरणच्छलेन
    यया सुकाकीरित्याप्यपादि ॥ ५८ ॥

त्रैलोक्यसाराद्भुतसुन्दरीमां
निमाय निमाय गर्भाधिराय ।
यदीयरूप प्रविधाय वेधा
सृष्टेः फलं तत्प्रथमं प्रपेद ॥ ४९ ॥

शंपेव कालजलदे शिखिन शिखेय
भानु प्रभेय तनुषंद्रमस कलेय ।
वेलेय मीनमिलयं कमलेय पद्म
सालंचकार तमिसाधिपार्ति मृगाक्षी ॥ ५० ॥

शृण्वन् धमकथां नमन् गुरुजन क्रीडन् कलत्रैः समं
कुर्वन् परिपठ शरीरदारण द्राक्षाविशीक रम ।
सरसाभिरुपद्रय क्षितितलं समापयन् सेयका—
निरये कालमनारतं क्षितिपतिर्मिम्ये विनीतैर्वृतः ॥ ५१ ॥

इति श्रीसिपुराभरणमहामहत्तमश्रीपप्परगुरोः पण्डितश्रीमहसेनाचार्यस्य कृते प्रद्युम्नचरिते प्रथम सर्ग समाप्त ॥ १ ॥

# द्वितीय सर्ग ।

---

अथान्यदा पिंगजटः शुचिस्मितो
मृगाजिनाषाढधरो वृषीकरः ।
हरेर्विवेशा सदनं समाययौ
नभस्तलाद्भारतसंमतोपि ॥ १ ॥

सुनिःस्पृहः परिहासपेशलो
जिनेन्द्रमार्गेपि रतः कलिप्रियः ।
बिभर्ति रूपं सुतरां मनोरमं
सदाभिमानिकमनोपि यो वशी ॥ २ ॥

जिनेंद्रतीर्थेशगणाधारणा—
स्तपाभिधीन् बोधसमुन्निमास्वरान् ।
कृताकृतान् जैनगृहान्मनोहरान्
मनुष्यलोके नमतिस्म यः सदा ॥ ३ ॥

हलीशचक्रेशगृहेषु पूजितो
निमित्तरोपी विषयेषु निस्पृहः ।
जिनेंद्रमार्गमिरतो शुभप्रियः
न यो विवादी प्रणयी न च क्वचित् ॥ ४ ॥

तमेयमायान् यदुवरानायको
विलोक्य चामीकरविष्टरात् द्रुतम् ।
ससंभ्रमः श्यामवपुः समुद्ययौ
तटात् यथा हेमगिरेर्घनाघनः ॥ ५ ॥

किमत्र कार्यं कृतमद्य यद्भव
न्निरीक्षितः पदपद्मपांसुभिः ॥ १२ ॥
नभः प्रसन्नं विमला दिशो दश
सुगंधिवाता भवनं मनोहरम् ।
विलीनमेनोऽद्य तवागमात्सम
मुनीश पक्वं शुभकर्मणः फलम् ॥ १३ ॥
त्वया कृतं साधु तपोधनाधुना
यदस्मदीयं स्पृहणीयतां परम् ।
यच्च नितांतं गमिता गतैनसा
समस्तलोकैकवरप्राघुर्णपदाम् ॥ १४ ॥
निशम्य विष्णोर्वचनं तपोनिधि—
र्जगाद वाचं वसुदेवनन्दनम् ।
किमेवमुक्तं भवता मनस्विना
यतो विभाव्या जिनसीरिचक्रिणः ॥ १५ ॥
परस्परं सम्प्रियवादिनीं गिरं
निशम्य नारद मुनिरिती यदूपतुः ।
मुनिमथापृच्छ्य च तत्र सत्वरा
जगाम सत्याभवनं कुतूहली ॥ १६ ॥
निविष्टया कांचनविष्टरे तया
मुदात्मदर्शे निजरूपसम्पदम् ।
निरूपयन्त्या स नभोऽपमागतो
मुनिर्न दृष्टो भूषणप्रपूजितः ॥ १७ ॥
प्रकुप्य तस्यै मदनाधिनिर्दयी
विनिर्दयात्मा समहंसपोषणः ।
जगाम वेगं महता समुन्नतं
विचित्रमार्गोपचितं विचिन्तितम् ॥ १८ ॥

अथाविश नृपति नारदः क स
क चापमान परमेष्ठमुखके।
दिशा विमुञ्चतिति चिरयम्बुद्—
स्सपानिधिस्तत्र गिरि नियच्छयाम् ॥ १९ ॥

कथमि तस्या किमु भूपण न या
विभाय शुद्धि पुनरेति पद्ममम्।
परेण वा सम्प्रति द्वारयामि किं
तया विना स्यादसुरी जनार्दनः ॥ २० ॥

प्रमृज्य रामां भुवमातिन्पायिनीं
नियोजय मायया पाणिपहले।
ततादर्मीभे भयनोंपुलतति—
प्रद्भुतसभीं शोकवतीं मुकुलाम् ॥ २१ ॥

इह यपूर्णा यद्दुरुकारण
यथा तयोहास्ति परं न किंचन ।
तवेमि विद्याधरभूभुजां गृहान्
प्रविश्य कन्या मगयामि सुन्दरीम् ॥ २२ ॥

विमृश्य इत्थ त्वरया समुत्थिया
सुकलुषालादरिविषमाननः ।
अनेकविद्याधरराजमंदिर
नपानिधिभूषरमाम्सार ॥ २३ ॥

ततापिको तत्र न यामर्माक्षर्भी
इहन्न लावण्यमयीं तदा तदा ।
भूर्गे विपश्य मनसा तपोधनः
समापयी ह्यपदयासता भुवम् ॥ २४ ॥

परिभ्रमन् भूमिमसौ मनोहरां
निरूपयन् भूपनिशान्तमण्डलम् ।
विचित्ररामारमणीयमुच्चकैः
पुरं प्रसिद्धं समवाप कुण्डिनम् ॥ २५ ॥
ददर्श भीष्मं विजितारिमण्डलं
तपोधनस्तत्र वशी विशांपतिम् ।
ददर्श च श्रीमतिसत्त्विका वधूः
समुद्वहान करिणीव दन्तिनम् ॥ २६ ॥
तयोरपत्यं प्रविलोक्य विस्मितः
स रुक्मिणं रूपगुणातिशायिनम् ।
प्रणामसत्कारविधानतः परं
प्रपूजितस्तेन तुतोष तापसः ॥ २७ ॥
पितृष्वसा तस्य सनीतिचक्षुषो
निशान्तमुच्चैर्वपाकपद्मभुः ।
स्वपक्षमीक्षस्व जगज्जिगीषतो
नृपात्मजा तत्र समाविशत्सती ॥ २८ ॥
अथापरापस्थितसौविदल्लकैः
समं प्रपूज्यागमपादपङ्कजा ।
जगाद सा रुक्मिणि पुत्रि नारदं
नमस्व पूज्यं बलदेवचक्रिणाम् ॥ २९ ॥
निरूप्य तां चारुचकोरलोचनां
स चिन्तयामास कृती पती मम ।
इयं विधात्री सफलान् मनोरथा—
न्निति प्रसन्ना मनसा विधेः सुतः ॥ ३० ॥

---

१ विश्वेकम् । २ अत्र पुरस्तादर्भके ।

कठमप्यर्थं समदात् समासीप
    सुकेतुआक्रांतमनापियासिनी
मय स्वमाया निजरूपसंपदा
    जितान्यनारी सुभगस्वरेखया ॥ ३१ ॥
उदीय वाच पिरत तपाधम
    पितृष्वसुः सा मुनमैक्षत क्षणम् ।
उपाच भीष्मस्य सहोदरा मुनि
    किमेषमुक्त भगपमिगद्य ताः ॥ ३२ ॥
स का मुने किं कुसुमस्य किं वयः
    क धाम रूप किमु का पिभूतय ।
ययायथ मे ममसास्ति कौतुक
    निवेद्यताद्यमशेषितक्रिय ॥ ३३ ॥
उपम्रनामा हरिपाभूपणः
    मयोषमा द्वारवती तदास्पदम् ।
रतिप्रियमार्थितरूपपेमप
    ममलमृपासमनामिपपजः ॥ ३४ ॥
निशम्य पेय जनकानुजायद्—
    पपतयुक्त मुनिना मनीषिणा ।
मथति मम् पुत्रि यमा मया श्रुत
    यतः पुप प्रानयत।निमुखकात् ॥ ३   ॥
पिपाय पर्यां पिद्विताम्मन त
    पिम्भाक्य भग मुनिनेति अस्मिरमम् ।
रुप मपिप्यत्यमुरोक्षिरा पपृः
    कम्मायमधितगनय रादिणी ॥ ३६ ॥
निशम्य तस्याः श्रुतिपाजितामृत
    पपा न पाच्या किमपि प्रपचितम् ।

स्मितप्रभामण्डलमण्डितास्यया
परं तया चैव ममे मुदा तमी ॥ ३७ ॥

अथाह भीष्मावरजा नृपात्मजां
विवेश यस्या दमघोषसूनवे ।
गुरुप्रमादस्य सुतो महीपते—
र्न सांप्रतं तत्पथमार्गकथनम् ॥ ३८ ॥

स्थिरीभव त्वं सुतनो विमुच्यतां
शुचः पदं चेदिनरेशदानजम् ।
तथा यतिष्ये मनसा समीहितः
करोति पाणिग्रहणं यथाच्युतः ॥ ३९ ॥

श्रुताच्युताख्यगुणैर्वशीकृतां
मनोभवः सीमनर्धैर्नृपात्मजाम् ।
तुतोष वाग्भिर्मृगयुर्यथा मुदा
मृगीमिवाकर्णितगीतनिस्वनाम् ॥ ० ॥

विधाय चित्रं प्रतिबिम्बमद्भुतं
तदीयमादर्श इवामले पटे ।
समीहितार्थं समवाप्य स व्रती
ययौ पुरीं द्वारवतीं समुत्सुकः ॥ ४१ ॥

विवेश वेश्माभ्यागतः शनै—
र्विभाव्यमानो हरिणा सकौतुकम् ।
वितीर्णकालस्वरविग्रहे मुनिः
कृतातिसत्कारविधिः क्षणं स्थितः ॥ ४२ ॥

त्वयाद्भुतं संचरतेह किंचन
विलोकितं चेति मधुद्विषोदितः ।
न किंचिदूचे वचसा स केवलं
प्रसार्य तस्यापरपुत्तमं परम् ॥ ४३ ॥

अपूर्वमस्याश्चरणांबुजद्वयं
विराजते निर्जितहंसिकागतेः ॥ ५० ॥

सुरेंद्ररामा किमु किंनरांगना
किमिंदुकांता प्रमदाथ भूभृताम् ।
नभःसदां स्त्री वद पक्षकन्यका
धृतिः क्षमा श्रीरथ भारती रतिः ॥ ५१ ॥

किमर्ककीर्तिः किमु नागनायका
जिताप्सरःकांताजनिकांति बिभ्रती ।
वपुःकृता लेख्यपदं विकल्पितो
ममेति केयं वद तात सुंदरी ॥ ५२ ॥

सुपर्णकेतुं कृतविस्मयं जगौ
तपोधनो मास्म भवः परिप्लुतः ।
इयं कुमारी तनया महीपतेः
प्रसिद्धनामा जगतीह रुक्मिणी ॥ ५३ ॥

करोषि चेत्कंसनिषूदनाग्रहं
ततस्त्वमेनां समवाप्स्यसि ध्रुवम् ।
विजित्य चैद्याधिपकेतनादिपि
विधाय वा चेदिपतिं परीक्षतम् ॥ ५४ ॥

नरेंद्रविद्याधरधाममोक्षमा
मया सुरूपा बहवो विलोकिताः ।
न कापि तुल्या वरणेन सुभ्रुवो
विनिर्मितेयं सुकृता प्रजासृजा ॥ ५५ ॥

नितंबिनीनां रतिविभ्रमे यदि
स्पृहास्ति तामेव वृणीष्व माधव ।
न पौर्णमासीमपहाय यामिनीं
कलावतोऽन्या रजनी समुद्भवे ॥ ५६ ॥

सपत्नीजनाः सन्ति तथापि वस्तुतः
    प्रियाभवत् श्रीमतिरस्य भूपतेः ॥ ६३ ॥

यथा जयन्तः सुरसद्मशासितुः
    शिवस्य षड्वक्त्र इवोग्रशक्तिमान् ।
महीभुजस्तस्य सुतो महोदयः
    पयस्तपो रुक्मिगुणास्ति कीर्तिमान् ॥ ६४ ॥

नगाधिराजादिव शंभुवल्लभा
    पयोदधेः श्रीर्जनिता मनोरमा ।
हिरण्यगर्भाच्च यथा सरस्वती
    तथा च भीष्मात्मजनिष्ट रुक्मिणी ॥ ६५ ॥

गुरोरनुज्ञामनवाप्य मानिना
    हृतारिर्मतामजयोत्थदर्पित ।
भूमीश्वरी सा समवापि रुक्मिणा
    पुरैव पाणौ दमघोषसूनवे ॥ ६६ ॥

तथा सम तस्य तु चेदिभूपते—
    स्तपोभिधे मासि सिताष्टमीदिने ।
विवाहदीक्षाविधिमात्तकंकणः
    परामृशंतो गणका व्यनीगणन् ॥ ६७ ॥

गुणाश्रयो नागवतीपुरःपति—
    मुरारिनामास्ति जितारिमंडलः ।
स तेन मत्वेति विलोक्य तां पितुः
    सुतः प्रतीतः समदात्तदाशिषम् ॥ ६८ ॥

नृपेन्द्र तस्य क्षणदी सपक्षया
    स्वकीयधाममहर्षं स्थितिक्रिया ।
तथानुरागो मनसः परं सुहृत्
    तथापि तस्या सममूयतमव ॥ ६९ ॥

समागता पुत्रपितु मनोभवं
 वने महाशोकतले प्रतिष्ठितम् ।
समाश्वसेन् माधव लोललोचना
 प्रयत्नमालोक्य चिरायचिन्तिनी ॥ ७० ॥

निपूरितारे स्तु गच्छ कुट्टिम
 क्षिते क्षितीशे गच्छेन धीमता ।
महाप्रभेदीनापसेन वैरिण
 प्रियोर्थिना देवगमेन पांसुभिम् ॥ ७१ ॥

नरोत्तम त्यामपहाय मानिनी
 न सेवते सा सुतनुर्नरान्तरम् ।
बलाभ्यित विभ्रमशालिन यथा
 मृगेन्द्रजाया मृगराजसंभवम् ॥ ७२ ॥

विधाय कार्यं मनसा समीहितं
 विधेहि दामोदर यत्सुखायहम् ।
यथा स्वरूपप्रतिपत्तिपादिनो
 प्रवृत्तिसाराः खलु मादृशां गिरः ॥ ७३ ॥

इति निगद्य वचांसि वचोहरे
 प्रियतमाप्रहिते प्रियवादिनि ।
निजपदं प्रति संप्रसिते हरिः
 सपमर्दा हरिद्युम्न श्यामपत् ॥ ७४ ॥

तत विचार्य करणीयमशेषमीशः
 मार्ग बलेन स्वहृदयपिनिश्चयेन ।
विभ्रम् मनोरथशतानि स्वपरिच्छ
 मापरस कुण्डिनपुरोपगम क्षणेन ॥ ७५ ॥

इति श्रीत्रिपुरामदनमहामहनमभोजमधुपो कविश्री
नरसेनात्मजस्य कृत प्रद्युम्नचरिते द्वितीयः सर्गः ॥ २ ॥

---

## तृतीय सर्ग ॥

कौतुकेन पुरमेतमीक्षितुं
नवनं वनमिवागतं घनम् ।
पाकशासनसमानतेजसौ
तत्र चक्रतुरुपस्थितौ ॥ १ ॥

संप्रविश्य बलकेशवौ पुरं
तिष्ठतः स्म निभृतं लतालये ।
तौ समुरुक्रमनसौ यथा सुरौ
देवसद्मनि मनोरमे सुखम् ॥ २ ॥

पूर्वमेव शिशुपालभूपति—
स्तत्परीत्य परितः पुरं तदा ।
भूपता निजबलेन तस्थिवान्
मेरुभूमिमिव तारकागणः ॥ ३ ॥

तावदात्मपरिवारसंगता
रुक्मिणी पुरवराद्विनिर्ययौ ।
प्राविशच्च भवनं स्मरालय
पूजितुं तदुत्तमे मनोमुखम् ॥ ४ ॥

तां विलोक्य नवमोत्पलेक्षणां
मधुपबद्धकचभारपट्टिकाम् ।
कामचापसमदीर्घलोचनां
चंद्रबिंबवदनां कलस्वनाम् ॥ ५ ॥

चारु कंबुनिभकंधराधरां
पीनपेशलपयोधरानताम् ।

मत्तवारणघटाभिराकुलं
  वाजिपूरखुरदारितावनिम् ।
सोपतापिकरयौमसंकुलं
  याव वीरपूरतपासमुत्थमम् ॥ १३ ॥

विष्णुना बलसखेन धन्विना
  दूरतोपि ददृशे विपक्षकम् ।
अब्धिमध्योद्गतबलोर्मिणा यथा
  मारुतैर्धुतसरितामिवोन्नतम् ॥ १४ ॥

कैतकी हरिणसी रणोयती
  भूरि तद्बलमवेक्ष्य चागतम् ।
कर्मदारुणमकारि किं मया
  रुक्मिणीति विषसाद मानसे ॥ १५ ॥

तां विलोक्य वदतिस्म सादरं
  वेपिनीं च रुदतीं च माधवः ।
पश्य वारिजविलोचने क्षणात्
  विद्धु भीतमरिसैन्यमाहवे ॥ १६ ॥

पश्य पश्य मम शक्तिमद्भुता—
  मंगुलीयपरिघूर्णनात् प्रिये ।
सस्ततास्त्रशरपातभेदिनी—
  मित्युदीर्य कृतवानसौ तथा ॥ १७ ॥

तद्बलं त्रिभुवनाधिपे हरे—
  र्वीक्ष्य राजदुहिता कृतांजलिः ।
सस्मिता तमभयं कृपोदरी
  याचतेस्म पितृसोदरादिषु ॥ १८ ॥

एवमस्त्विति निगद्य केशव—
  श्चरितजमभि भीतिवर्जिता ।

क्रोधदीप्तवदनो न्यपतत
    क्षीयमाणपतिं यथा हरिः ॥ १९ ॥

शौरिणा निशितशस्त्रमोघिना
    मार्गितं बलमितस्ततो गतम् ।
मुग्धचक्रवरवारिसंकुल
    मेघवृन्दमिव वायुनोद्धतम् ॥ २० ॥

वीक्ष्य भग्नमथ रुक्मिणा बल
    रोषरक्तवदनेन धावता ।
रौहिणेयमभिसंदधे शरः
    कार्मुके कम्पितभीतकातरे ॥ २१ ॥

तेन तस्य विदधे न सङ्गमात्
    सायकेन गितिमापि किंचन ।
केवलं झगिति कोपपावको
    माधवीय पतितोंगतोंमसा ॥ २२ ॥

समहस्य विफलीकृतायुध
    नागपाशदृढरज्जुभिर्घनम् ।
स बबन्ध मुशली बलोद्धुरं
    शक्रजित्पवननंदनं यथा ॥ २३ ॥

दामिनं रिपुसवंशमुन्नतं
    भीषणं कुपितमानसं रणे ।
चेदिराजमवधीन्नरायणः
    सिंधुरं मृगपतिर्यथोद्धतम् ॥ २४ ॥

लब्धकीर्तितगुणाम्बसंकट
    वीद्रनिर्मितकचग्रवर्तनम् ।
दुर्मिकुम्भगलदसृक्कर्दम
    भग्नभूरिरथवाजिसंकुलम् ॥ २५ ॥

संविधाय रणमित्थमाकुलौ
भीष्मराजतनयं विमुच्य च ।
स्वां पुरीं प्रति कृतोत्सवामुभौ
जग्मतुः प्रमुदितौ बलाच्युतौ ॥ २६ ॥

रम्यरैवतकसानुमण्डपे
देवसद्मनिभे सभे तथा ।
पाणिपीडनविधिर्विधानतः
प्रीतयोरभवदग्निसन्निधौ ॥ २७ ॥

तत्र वृत्तविधिपाणिपीडनं
चारुभूषणधरं वधूवरम् ।
बान्धवैः सह विवेश तत्पुरं
हर्षलोलुपविलासिनीजनम् ॥ २८ ॥

माधवं नववधूसमन्वितं
प्रद्युम्नमप्यकरणीयवर्जितः ।
द्वारपालिपुरसुन्दरीजनो
हर्म्यपङ्क्तिशिखरेष्वपेक्षत ॥ २९ ॥

काचिदायतविलोचनोत्सुका
कज्जलेन तिलकं कपोलयोः ।
कुङ्कुमं नयनयोर्विधाय च
प्राद्रवद् भवनाग्रकुट्टिमम् ॥ ३० ॥

केशपाशमपरा अपात् स्वयं
भ्रस्ति मास्ममपि नावगच्छति ।
पाणिपद्मविधृतस्तनांशुका
लम्पपिप्रममगाद्विलोकितुम् ॥ ३१ ॥

अन्यया कनकनूपुरद्वय—
प्रस्तुतप्रपदभूषया पुनः ।

अथ द्वारवनितासमन्वितं
वस्तु कांचनमनारिपूरितम् ।
सप्तभूमिकमनल्पवाहनं
रुक्मिणीप्रमतये ददौ नृपः ॥ ३९ ॥

मानसे यदपि चापि रुक्मिणी
शालिनो निषिषिशा गुणाधिका ।
त्वपरी तु विरहार्तिपीडिता
दुःखमापि न मना कर्पयन ॥ ४० ॥

रुक्मिणीपदमणप्रपट्टपदे
माधव रतिसुखाभिसमम्पगे ।
मारवेत्र परितुष्टमानसे
दुःखमापि पगमेव सत्यया ॥ ४१ ॥

अन्यदा त्रिभुवन मर्म तथा
पत्रपूगफलपूर्वसंचयम् ।
चर्वितोज्झितमनतमीरमं
स्वांबरे निशि बबंध माधवः ॥ ४२ ॥

तत्पिधाय सहसा सितांशुकं
केशवः प्रणयकोपसंगताम् ।
बन्धितु प्रियतमां सुकेतुकां
माविशत् सदनमद्भुतास्पदम् ॥ ४३ ॥

तं विलोक्य नयवल्लमापति
सा चुकोप मनसाभिमानिनी ।
वक्रवाक्यवचनैरतर्जयत्
सोपि तां प्रति वितीर्णसम्भ्रमा ॥ ४४ ॥

नर्ममर्मपरिपाकनामिरः
सत्यया सह पिधाय केशवः ।

वाक्यमेषमभिधाय मानिनी
  ओपमास्य मुदिता क्षमाधव।
रुक्मिणी परमरूपसंपदं
  प्रद्युमस्ति मम देव कौतुकम् ॥ ५२ ॥

एवमस्तु किमिवात्र दुर्घटं
  तद्गृहाम्बुपरिपूर्णनिर्झरी।
तस्मदोऽम्लतमिरीन्द्रपातनं
  कर्तुमापदय रुक्मिणीपुरम् ॥ ५३ ॥

तामवाप्य च क्षमाद् माधवः
  स्वो वन मन सितांशुका सती।
तच्चकार च तथेति भीष्मजा
  भर्तृवाक्यवशगा हि योषितः ॥ ५४ ॥

चारुकृपकृतशालितोरणं
  भृंगराजिविहितोरुतोरणम्।
पक्षिवायुजयशाम्यसुंदरं
  मत्तकेकिकुलनृत्यसकुसुमम् ॥ ५५ ॥

वक्ष्मेन स हताय सा तत—
  स्तत्र सोपवनमाप सुंदरम्।
कल्पशाखिभिरलंकृतं यथा
  नन्दनं वनमिवा पुलोमजा ॥ ५६ ॥

फुल्लतामरसचारुलोचना
  कोकहारविलसत्पयोधरा।
वारिहादकलिकाभिर्दर्पिनी
  भाति तत्र वनितेव वापिका ॥ २७ ॥

एकतोकहदयोपपत्नये
  वामपाणिमुपयुज्य दक्षिणम्।

सा विगाह्य मणिवापिकाजलं
संप्रपूज्य कुसुमैः सुगंधिभिः ।
पादयो सविनय प्रणम्य तां
याचते स्म वरमित्यमंजसा ॥ ६५ ॥

रुक्मिणीं प्रति विरक्तमानसं
त्वं विधेहि मयि देवि किंकरम् ।
माधवं यदि ममास्त्यनुग्रहो
दैवतं हि फलवद्विलोकनम् ॥ ६६ ॥

देवतास्तुतिविधायकं वचः
संनिशम्य विपुलोरसोद्यतः ।
गुल्ममध्यगहनादसौ हसन्
निर्ययौ दनुजराजकम्पकाम् ॥ ६७ ॥

अब्रवीच्च सुतनु त्वयाधुना
रुक्मिणीचरणपूजनादपि ।
प्राप्यतेत्र सुभगत्वमुत्तमं
येन न त्यजसि मानसंगमम् ॥ ६८ ॥

माधवात्समधिगम्य रुक्मिणी
सा प्रसन्नवदना बहिः स्थिरा ।
सचुकोप हृदये विचक्षणा
न हसद्वचनमाह मर्मगम् ॥ ६९ ॥

नारदो जगति नंदनंदनो
गीयते खलु तथाविधो भवान् ।
गोपधर्ममपरस्य कस्य वा
जायते विकसित कलेवराम् ॥ ७० ॥

तादृशोपि विधिना निरूपितो
रम्यमाल्यवहने सुपुष्करे ।

# चतुर्थ सर्ग ।

---

अथ परंतपरुक्मिसगर्भया
परमरूपसमृद्धकलागुणैः ।
खचरराजसुता विजिता सती
क्षपितमानमदा हृदि विव्यथे ॥ १ ॥

तदपकारपरापि दिवानिशं
न तदुपायमवाप कदाचन ।
समुपलभ्य मनोहरतो मनो
मनसि तोषमगात् खचरी तदा ॥ २ ॥

सपदि मे तनयो भविताग्रज—
स्तदनु भीष्ममहीपतिसंभवा ।
सुतमवाप्स्यति याव न वा तयं
भवतु सा वपुषा वयसा युत ॥ ३ ॥

नृपसुता मदघातनहेतवे
हरिसमक्षमिमां विदधे स्थितिम् ।
इति विचिन्त्य तदा प्रजिगाय सा
सपदि भीष्मसुतां प्रति दूतिकाम् ॥ ४ ॥

सविनय प्रणिपत्य नृपात्मजां
वदति सा मम देवि न दूषणम् ।
खचरराजसुतावचनाद् ध्रुवं
किमपि ते पदयोः कथयाम्यहम् ॥ ५ ॥

प्रथमसङ्गविवाहसमुत्सवो
यदि भवेत्तव रुक्मिणि पुण्यतः ।

कुटिलकोमलनीलशिरोरुहाम्
पदतले तनयस्य निशान्त् इषे ॥ ६ ॥
अथ मदीयसुतस्य करमहो
भवति तेऽप्यपमेव विधिः स्फुटम् ।
इति निशम्य विहस्य च सा जगौ
पतति पङ्कगिनी मम तत्प्रमा ॥ ७ ॥
स्थितिमिमां प्रविधाय परस्परं
प्रतिमुखं इतिम प्रतिपद्य ते ।
सकलसम्पसमेतनरोत्तम
प्रमुसमक्षमुदारमती स्थिते ॥ ८ ॥
अथ निशाविरमे वरमंदिरे
नृपसुता शयिता शयने मृदौ ।
मदमजम्ममहासवसूचका
य इह तानखिलान् सुखमैक्षत ॥ ९ ॥
नमसि देवविमानमधिष्ठिता
किल चरामि सुख निजलीलया ।
त्रिदशाङ्कुशमर्कहुताशनौ
कुमुदबन्धुमपांपतिमुद्गतम् ॥ १० ॥
इति विलोक्य सुता नृपतेस्तदा
समपबुध्य निवेद्य च विप्यते ।
प्रियतमेन निवेदितसत्फला
परमतोषमियाय नृपात्मजा ॥ ११ ॥
मधुपपक्षविवाधय षोडशात्
समनुभूय सुखं त्रिदशाधिपः ।
समवतीर्य ततः पुरपुण्यत—
स्तनुदरास्य बभूव विभूषणम् ॥ १२ ॥

इति तवाभिदधे पुरयेण स
क्षितिप नन्द चिरं सुतजन्मना ॥ १९ ॥

इति निशम्य वचो मुदितस्तदा
नृपतिरक्षम विमुच्य नरोत्तमः ।
सकलमस्य नराय ददौ धनं
स्वसुतजन्मनिधानमिवेदिने ॥ २० ॥

मुररिपुप्रमुखस्य नियोगिनः
प्रमुदितः सहसा विदितामर्तीन् ।
निगदतः परिभाष्य गण क्रियां
विधिवशादनु पुरे क्रियतां क्षणः ॥ २१ ॥

तदनु मन्त्रवरेण हरस्तदा
स्वधरोजसुतासुतसत्तम ।
चलितचारुसुतस्य निवेदिते
धनमदात्स महोत्सवपूर्वकम् ॥ २२ ॥

क्षितिपतः सुतजन्ममहोत्सव
पुरमवाप परां रमणीयताम् ।
गजपुरं परमागमगाथया
जनमकारयदेव जिनेशचक्रिणाम् ॥ २३ ॥

प्रियतमागमजन्मवधीरतो
धनमसौ वितरन् सकलार्थिने ।
प्रमदयन् निजपौरपरंपरां
सुतसमेतः परितुष्टमनाः स्थितः ॥ २४ ॥

अथ गते तनयोत्सवपर्वणा
पदमुपगम्य तदा दिन पयपे ।

१ महमामा । २ इन्द । ३ हस्तिनागपुरम् । ४ पुण्यास्तव । ५ जन्ममहोत्सवे । ६ तीर्थंकरचक्रवर्तिनो जनका नाभिनन्दनादयाम् । ७ पुरा समाख्यातसा । ८ इन्द । ९ सन् । १० सति ।

१कुड्मलपाणिपद् विहितस्मित
मस्फुटलतया भितवैरपि ।
विपिनसम्पकलितविग्रह
सकलसत्त्वमनोनयनोत्सवम् ॥ ५५ ॥

स परिगृह्य शिशु मुदितोऽवदत्
प्रियतमामिति बालमवाप्यहम् ।
तव गृहाण सुत दयिते शुभ
त्वमसि देवि यतोऽगमसाक्षसा ॥ ५६ ॥

इति निशम्य गिर दयितस्य सा
प्रवितताम मुदा करपल्लवी ।
समवलोक्य निकुञ्चितपाणिका
समगदद्दयितामिति सादरम् ॥ ५७ ॥

किमुत ते दयिते करसंहति—
स्तनय पद्मशाली तव पिपते ।
भवति तत्परंपाहतिगोचरो
हृदयशल्यमय मम बालकः ॥ ५८ ॥

यदि भवेत्सुकृत च इत मया
परभवे तदय शिशुरापितात् ।
प्रियतमादरमेव न मे कुल—
स्तवसमाप सुतेन ममामुना ॥ ५९ ॥

इति निगद्य च सा भयदुःखक—
र्षपनयारिपरिप्लुतलोचना ।
समवलोक्य जगाद म तां पुनः
सुतनु मा भव दुःखितमानसा ॥ ६० ॥

---

१ कोमलकरचरणम् । २ भावर्वरः । ३ बलवन्मालो । ४ पुत्राभिलाषा । ५ दल-
म्बाला । ६ तस्मात् । ७ पादताडनविषयः । ८ पूर्वतां ।

अन्विष्य तं सुवदने महतादरेण
    मुग्धे त्वदङ्गगतमेव पुनः करोमि ॥ २३ ॥

कृष्णाद्रिसीमवनसिन्धुमरुप्रपापापीन्
    दुर्भेद्यकर्कशभुवस्तुरगाधिरूढान् ।
शूरान्भटान्विविधवेषधरान्कुमारा-
    नन्वेषितुं प्रतिदिशं विससर्ज शौरिः ॥ २४ ॥

अन्वेष्य मासमनोपममी मनुष्याः
    प्रत्यागता विफलयानविलुप्तशोभाः ।
स्वामिक्रमौ सविनयं प्रणमन्ति स्थिता
    एवेति विज्ञपयति प्रतिहारपालः ॥ २५ ॥

पुत्रस्य तद्वदनपंकजमिन्दुकान्ति
    यावत्स्मरन्नुपसृतासहितः स तस्थौ ।
तावत्सशोकमुपविश्य गतोऽसवा तां
    हारावलीमवततार मुनिप्रभक्तः ॥ २६ ॥

पृष्ट्वाथ कथनं ततः सकलं विदित्वा
    तस्मान्मुनेः परमशोकभरार्तमूर्तिः ।
सद्यो बभूव गुणदोषविवेकशून्यः
    शोकाग्निभूतवदनो हरिमाससाद ॥ २७ ॥

स्थित्वा क्षणं हरिमुखात्स वचो विशुद्ध-
    माम्नायगर्भमतुलं जिनैरुपगीतम् ।
शोकं निवार्य निजबोधबलेन तीव्रं
    तस्यापि नारदमुनिः सकलामवैदी ॥ २८ ॥

यो गेहवासमपहाय वनं प्रयातो
    धन्यो जनो जगति वीतसमस्तमोहः ।

---

१ वदनावृतान् । २ प्रारणाल । ३ वीतसन्तति । ४ सर्वमोपरिर्दे ।

नूनं न पश्यति न पश्य वियोगदुःखं
पुत्रे हृते च रिपुणा सहसा मृते च ॥ २९ ॥
आलाप्य माधव तवाद्य सुदुःखमेव
मन्ये स्वजीवितमपैतदस्य निकामम् ।
को नाम शोच्यमसारजगत् विलोक्य
संतोषमेति मतिमानरतोपकारः ॥ ३० ॥
संत्यज्य माधव जनं प्रविहाय लक्ष्मीं
वैराग्यतामपि परिगृह्य विमोच्य दृष्टिम् ।
शोकी तथापि तव शोकवशात् जातः
स्नेहात्मना भवति बन्धनिमित्तमेव ॥ ३१ ॥
त्वद्दुःखतः परमदुःखमुपैमि नूनं
तस्माद् विमुञ्च मधुसूदन दुःखजालम् ।
कोऽन्यो विमोचयसि पुत्रवियोगदुःखा-
त्त्वां धैर्यमिममतोऽपि विशुद्धबुद्धे ॥ ३२ ॥
ध्यानानि वेत्सि सकलानि तथैव धर्मं
स्व दुःखमोहमपरस्य करोषि जातः ।
तत् त्वमेव कुरु शोकमपास्य मनो हि
किं दीपतं त्रिभुवनं दधते प्रदीपः ॥ ३३ ॥
शोकापनोदमथ तस्य नृपस्य कृत्वा
श्रीरुक्मिणीगृहमवाप मुनिः सदुःखम् ।
तद्दर्शनादभिमुखं सहसोत्थिता सा
सिंहासनं कनकरत्नमयं विमुच्य ॥ ३४ ॥
एत्य सदुःखमपि विप्रसमागमेशा
पादाम्बुजावुपरि सा पतिता रुरोद ।

---

१ विम्बकम् । वसन । ३ दुःखमार्त । ४ दूरस्थितिमानः
५ पूर्वोक्तकारणम् । ६ सुखम । ७ दुःखम ।

पुत्री सुत जनक हा छलतो सुपित्या
केनापि दुःसमसमयापिपति पातितास्मि ॥ ३५ ॥

नि:श्वस्य दीर्घमिति शोकभरेण बाढ
शोकाकुलोपि मुनिरेयमुपाच धीरम् ।
उत्तिष्ठ पुत्रि कुरु मा शुचमेषमुर्व-
मप मृत च सुधियो न हि शोचयन्ति ॥ ३६ ॥

नेदं तवैव भुवि मृतममृतपूर्वं
दुःख तनूजविरहोत्थितमद्य पुत्रि ।
साधारणं मयभृता तदशेषमद्य
तस्मिन् करोषि किमु शोकमसाधहेतुम् ॥ ३७ ॥

भूपाः पुराणपुरुषा बहवः कथासु
मामद्यमममृतयः स्मृतपूर्वयरे ।
मायाविपरिमिपहृत्पहृस्व नीताः
मरसपदा मिअपदं पुनरागताश्च ॥ ३८ ॥

एष नर्दापमभिगम्य यथा विनोका
रुक्मिमण्यपोषत मुर्नि मृगशावनत्रा ।
तातस्त्वमद्य भगवन् जननी त्वमद्य
स्वरणाश्रयमरजसा चिरेर्जाहृतास्मि ॥ ३९ ॥

यावन्ममो गुणगणस्मृतिमति तात
तावत्तदीयमुरमेव पुरःस्थित वा ।
पश्यामि स्वप्नहृदयामिनामीपितादि
र्मीष्म यथा मृगगणा मृगतृष्णिकाभिः ॥ ४० ॥

एष यदस्त्वमिद्य मुनिर्मिति बाला
शार्कं विमुच नमय मुतमामयामि ।

---

१ हा हा विनरमूषकमस्वर्यं । २ दु गवारमम् । ३ मिन्नार्षीहृगामि ।
४ मयमारवाहि । ५ मायाविना ।

कार्यं विनाशितमशुभ भ्रमता मयाद्य
किं खिद्यते तव सुतस्य विमार्गणायां ॥ ४१ ॥
ऊचे मुनिं न सुखतो मम पुत्रवार्ता
लब्धा यतो मरुदवैर्भुमिः समस्तैः ।
भूमंडलेपि मृगपक्षिरसौ न दृष्ट-
स्तस्मात्स्वपुत्रमिति मगकमेव भूयात् ॥ ४२ ॥
तां नारदः पुनरवोचत दीनवक्त्रां
बाले वृथा मम वचांसि सुतं त्वदीयम् ।
नीतं खलेन रिपुणा यदि नानयामि
तस्मात्समाश्वसिहि पुत्रि विमुञ्च शोकम् ॥ ४३ ॥
कंसानुजो यतिरभूदतिमुक्तनामा
लोकत्रयं करतलामलवद्विदित्वा ।
सिद्धिं गतः स हतघातकमघानु-
र्नैमित्तिकोपसहितोपि न वक्ति किंचित् ॥ ४४ ॥
गतास्मि पुत्रि खलु पूर्वविदेहरम्यं
सीमंधरं जिनपतिं प्रणिपत्य पृष्ट्वा ।
ज्ञात्वा तनूजचरितं पुनरेमि तस्मा-
दाश्वासनाय नियतं तव भीष्मपुत्रि ॥ ४५ ॥
संभाष्य भूपतिसुतामिति सूनवाचा
दूरं पतगपदवीं पुनराससाद ।
ऊर्ध्वाननैः पुरजनैः परिदृश्यमान-
स्तावद्गतो नभसि यावदृशौ न दृश्यः ॥ ४६ ॥
सत्रा विधाय कृतिकर्म जिनालयेषु
नत्वा च चारणमुनीन् गुरुभक्तिपूर्वम् ।

१ धर्षध्यसम् । २ विरहस्थानम् । ३ अनिमपि । ४ सुवर्मार्गमायाम् ।
५ सामायिकादिक्रिया ।

तद्रामणीयकमृतोऽपि मुनिः सुराणां
श्रीपुंडरीकनगरं समवाप वेगात् ॥ ४७ ॥

सीमाधिपाः सुरकिरीटनिघृष्टपादाः
षट्खण्डभूमिपतयो मधुसूदनाद्याः ।
संपत्पदं यदनुनापि विभूषयन्ति
किं वर्ण्यतेऽस्य नगरस्य समातनस्य ॥ ४८ ॥

तस्मिन् ददर्श सदनं समवादि रूपात्
सीमंधरस्य मुनिरेष कृतप्रतिज्ञः ।
पूर्णं नृनाकिभुजगेन्द्रगणैरसंख्यैः
त्रैलोक्यमभ्युदिव यन्मिलितं विभाति ॥ ४९ ॥

द्वारावतीर्य विधेतो मुदितः प्रविश्य
प्रज्ञागभूरिति नमस्तुतिमाततान ।
सीमंधरस्य नतनाकिकिरीटकोटि-
रत्नप्रभास्फुरितपादसरोरुहस्य ॥ ५० ॥

मायाभ्रमोभयकरीन्द्रमृगाधिपाय
भव्याब्जनन्दपरिबोधनभास्कराय ।
नम्रामराधिपशिरश्च्युतपारिजात-
मालारजोरुणितपादसरोरुहाय ॥ ५१ ॥

मोहान्धकारपटलैकनिशाकराय
संसारकाननसुदुर्गमयानमाय ।
निर्वाणपादपफलैकरसायनाय
स्याद्वादगर्भवचनाय नमो जिनाय ॥५२॥ युग्मम्

स्तुत्वेति नामयसमाभिनभूमिभागे
गत्वा स्थितं सदसि चक्रधरो ददर्श ।

---

१ भाजनात् । २ नरदः ।

द्वारावती वसतिरम्यलसद्गृहेषु-
स्तस्य प्रिया मृगदृशी नृप रुक्मिणीति ॥ ५९ ॥
वाञ्छामि वाञ्छितमनोरथकल्पवृक्ष
श्रोतुं जिनेश्वर हरेस्तनयस्य वृत्तम् ।
देव प्रसीद कथयेति कुरु प्रसाद
विज्ञापिते कथयितुं पुनरारभेत ॥ ६० ॥

भूपोऽस्ति यादवकुले हरिरुन्नतश्रीः
श्रीरुक्मिणीतनुभवोऽस्य बभूव सूनुः ।
संस्मृत्य पूर्वभववैरमरातिनाऽथ
नीतश्च तक्षकशिलापिहितश्च बालः ॥ ६१ ॥

श्रीकालसंवरनृपः प्रियया समेतो
विद्याधराधिपतिराप च तं प्रदेशम् ।
बालं विलोक्य परिगृह्य पुरं निनाय
तस्मिन्नवर्धत शशीव कलाभिरामः ॥ ६२ ॥

प्रद्युम्न इत्यभिधया प्रथितः पृथिव्यां
मासैः शुभैस्तदनु षोडशभिः समेतः ।
संवत्सरैरपि समेष्यति तत्प्रमाणै-
र्विद्याद्वयं समुपलभ्य पितुः पुरं सः ॥ ६३ ॥

तस्मिन् समागतवति क्षितिपाल तेऽस्या-
स्तम्बे भविष्यति वने शुभशंसि सर्वम् ।
रुचिरपङ्कजवना गृहदीर्घिकाः स्यु-
र्मूलादशोकतरवो निचिताश्च गुच्छैः ॥ ६४ ॥

पार्श्वैस्तु पुंगपताकुलितास्तमाशा
गंधाम्बुपरूपरपङ्कचिताश्च भूताः ।

---

१ रुक्मिण्याः । २ उपवने । ३ कुसुमवृक्षम् ।

अन्येऽपि तत्र तरवो समयं विकल्प्य
सर्वर्तुभिः फलदाः सहसा भवेयुः ॥ ६५ ॥

भूम्यो विचित्रवसनाः सरसाश्च कुम्भाः
कान्त्योऽपि तत्र सहसैव मृगायताक्ष्यः ।
किंचिद्विजृम्भितसमुन्नतबर्हमालाः
केकामुखा रचितचित्रपदा मयूराः ॥ ६६ ॥

योऽयं त्वया करतले कलितो नरेन्द्र
मान्यो मुनिर्जगति नारदनामधेयः ।
मिथ्यात्वमार्गकुशलो नभसो यतात्मा
देवस्रुती हरिदिशाय समागतोऽत्र ॥ ६७ ॥

नत्वा जिनं पुनरुवाच स चक्रवर्ती
देव प्रसीद वद माधवसंभवस्य ।
वैरस्य कारणमुदारमपि चेष्टितस्य
जन्मान्तराणि च रिपुं च शुभाशुभं च ॥ ६८ ॥

पृष्टो नरेन्द्रपतिनेत्यनुभाष्य देवो
द्वीपेऽत्र भारतमनन्तगुणं यदस्ति ।
भूपाल पुण्यजनताभिहिताधिवासो
देशोऽस्ति तत्र मगधेति जगत्प्रसिद्धः ॥ ६९ ॥

ग्रामोऽपि शालिवनपूर्णपयोऽस्ति तत्र
तस्मिंश्च सोमवदनः किल सोमदत्तः ।
विप्रो बभूव कुलजातिकृतावलेप
आसीच्च तस्य दयिता कुलजाग्निलेति ॥ ७० ॥

पुत्रौ तयोः सकलवेदपयोधिपारं
यातावपि स्वकुलजातिमदाभिमानात् ।

---

१ कुलजातिकृताभिमानः ।

स्थित्वा अरण्यमिव प्रतिपद्यमानौ
नाम्नाग्निभूतिरितरोपि च वायुभूतिः ॥ ७१ ॥

मिथ्यादृशौ समतपातितबालकोकौ
मिथ्यापदार्थपरिकल्पनपुष्टमानौ ।
तौ विप्रतो मुदितमानसवृत्ति याव-
त्तीर्थे जिनस्य पर्युपास्यसुतस्य तावत् ॥ ७२ ॥

श्रीमाननंतगुणराशिरसंगपङ्को
निर्मूलितापचितरूपी मदकुम्भिसिंहः ।
जेता परीषहमहारिवरूथिनीना
सन्मार्गदर्शनरतो निरतो व्रतेषु ॥ ७३ ॥

श्रीमेरिषसेनमुनिनिर्जितमारवीरो
गम्भीरधीर्विविधबोधविनिद्रनेत्रः ।
शिष्यैः समं विविधलब्धियुतैर्नियोगी-
स्तद्धामनंदमयूपं समुपेयिवान् सः ॥७४॥युग्मम्

आपृच्छ्य रक्षकममुष्य वनस्य सर्वं
योगीश्वरोपि स विधाय विधिं यथोक्तम् ।
वेदीनिवेशितशिलाफलके विविक्ते
तत्राप्यशोकतरुमूलमलञ्चकार ॥ ७५ ॥

आकस्मिकीं समवलोक्य वनस्य शोभां
तस्य प्रभावजनितां मुनिपुंगवस्य ।
उद्यानपो नृपति विस्मितमानसास्ते
कृत्वा प्रदक्षिणमर्घममलोसिपुष्प ॥ ७६ ॥

आस्थानगत पतिपतिं जगता जगाम
श्रीमज्जिनेन्द्रपदपंकजषट्पदाली ।

---

१वासुपूज्यसमकालप्रदीपस्य । २ महाणुवेनामाम् ।

पार्श्वे प्रपंतुमथ तस्य गणाधिपस्य
मध्यस्थभावमपकम्प्य च जग्मुरन्ये ॥ ७७ ॥

ग्रामाद्बहिः समवलोक्य जनं समस्तं
निर्यान्तमुत्सवमयं सभयं विनापि ।
पप्रच्छतुर्द्विजसुताविति दुर्विदग्धौ
क्वाथ प्रयाति परवेषधरोऽद्य लोकः ॥ ७८ ॥

वाचं तयोरिति निशम्य जगाद कश्चि-
त्पारंगतः सकलशास्त्रमहाम्बुराशेः ।
सेव्यं सतां प्रशमिनं विविधर्द्धियुक्तं
साधुं प्रयाति मुनिमापकमेव नतुम् ॥ ७९ ॥

दिग्वाससं न हि वदति मुनिं न साधुं
किं तु द्विजातिरनघः कुलसंप्रसूतः ।
निस्तारणे स्वपरयोः सहसा समर्थं
साधुं मुनिं श्रुतिपथार्थविदस्तमाहुः ॥ ८० ॥

तस्मादय क्षितितले खलु पूजनीया
नाकस्थलेऽस्ति न च नास्ति न चापि मूलः ।
एवं तयोः पक्षवाक्यवचेन मुग्धो
मज्वाल कोपदहनोऽस्य मुनीन्द्रभक्त्या ॥ ८१ ॥

यत्पादपद्मरजसा विरजीकृताङ्गा
मुक्त्वा सुखं शिवपदं प्रति यांति भव्याः ।
ते ब्राह्मणाः सकलसत्त्वहिता भवन्ति
मान्ये द्विजा विप्रयिणो भवतोः समानाः ॥ ८२ ॥

स्वत्वान् ऐणाजिनमनामथ सत्कयामि
लोकापवादविरमे च सदैव मूकान् ।

---

१ मिथ्यात्वम । २ कर्मपथनयतासमर्थेन । ३ प्रतिष्ठा । ४ ऐणमाजन
चर्मादिरिचनादि ।

सयोगिनेव हि शुभाशुभकर्मराशी
पुण्याघपी सपदि वेल्पकिनेति स्मतौ ॥ ८९ ॥
आगच्छतं वटुवराविह नः समीप-
मारभ्यमीममद्विपाविव चेरमाणौ ।
कालुष्यतां किमु पुर्वां नयथो वृथैव
श्रीमंदिरं वनसरो यतिहंससेव्यम् ॥ ९० ॥
तद्वाक्यतः क्रुधमवाप्य यतेः सकाश
तौ जग्मतुः सपदि कोमिरमुं शपतौ ।
निर्लज्ज रे मलिन रे श्रुतिमार्गबाह्य
शापं ददासि किमु सत्यवर्जितोऽपि ॥ ९१ ॥
विप्रौ यति पुनरिह समवोचतां तौ
किं वाचया निगदितैर्बहुभिर्वचोभिः ।
चेतासि नौ भवसि चेद्विदुषां समक्ष-
मावां त्वया शठ यथाभिहितौ तथैव ॥ ९२ ॥
अन्यच्च शास्त्रसमयेऽत्र पराजितस्य
को निग्रहो भवति निश्चयतो विधेयः ।
नैत्वाभिरेवं शुभे शुचिवाप बुद्ध्या
यद्रोचते भवतु यामिति साधुनोक्तम् ॥ ९३ ॥
जातावयोयदि भवाभिमतं भवाय-
स्त्वयि प्र्युपयताम कपयन निर्जितस्त्वम् ।
निर्वासयसे विप्रयतः नगिकादस्मा-
दित्यूचतुर्द्विजसुतावपमेव दंडः ॥ ९४ ॥
एवं विधाय विदुषां पुरतः प्रतिज्ञां
तेषु स्थितेष्वपि परैः स्वरसाम्यसूयम् ।

---

१ कुमिना । २ भक्षिभि । ३ सम्मतवे । ४ निम्मारयवे । ५ वैरतः ।
६ विचारवर्हिन । ७ वरतरैर्व्याप्तित ।

ग्रामेत्र विप्रकुलजोऽप्यपतिः प्रसिद्धः
क्षत्राधिपः प्रवरनामपरो बभूव ॥ १०१ ॥

क्षेत्रेऽथ तस्य परवृक्षसमीपदेशे
आर्तं शृगालयुगलं विपिनादियागात् ।
वृत्तिं क्रमेण तदगात् कुणिपाशनेन
कालः कियानपि गतोऽत्र सुखेन तस्य ॥ १०२ ॥

क्षेत्रं गतेन सह कर्मकरैः कदाचित्
दूरावदर्शि नभसि प्रवरेण मेघः ।
गर्जन्निरन्तरगभीररवः सचापः
संतर्जयन्निव निर्दोषरिपुं न कोपात् ॥ १०३॥

सीत्कारवायुपरिकम्पितविश्वकोटे
वेगाद्विमुञ्चति जलं नवधारिवाहे ।
सर्वं हलोपकरणं स विहाय तस्मिन्
कुम्भागजनाम भवनं प्रति वेपिताङ्गः ॥ १०४ ॥

वृष्टिर्बभूव निपिता दिवसानि सप्त
गार्भायुयुग्ममथ तीव्रबुभुक्षयार्तम् ।
निर्मृत्य गुल्ममहताद्विरसं च चर्म
भव वदतः सर्वसामिह चर्मरज्जुम् ॥ १०५ ॥

तत्रो जगाम परया सहसा च गृध्यपा
पीडां तथापि महतीमभिमत्य भूम्नात् ।
प्रक्षिप्य शिशु परमान् मपतापि सुम्रा ।
आर्ता पुनां तिजसुताविह वैरयागात् ॥ १०६ ॥

---

१ प्रवरविप्रस्य । २ शृगालयुगलं । ३ पलक्षमांसेन । ४ ग्रीष्मत्तु–५ वृक्षमांसमनें । ६ क्षत्र । ७ कम्पितशरीर । ८ सप्ता । ९ शृगालयुगलं । १० स्वांके । ११ क्षुधा । १२ मक्षमानाय ।

प्रायेण जंतुरयमेव हि दुर्विदग्धो
नूनं स्वमुकमपि विसरतीह मोहात् ।
येनानयोरशुचिभक्षणपूर्वकं त-
न्निर्वेदकारणममुष्य विस्मृतं च ॥ १०७ ॥

पापेन जातिकुलरूपयशःस्वभोग-
सौहित्यधीरमतिधृतिभिर्विहीनाः ।
पुण्येन सर्वसहिता मनुजा भवन्ति
जानन्निदं वहति जातिमदं न विद्वान् ॥ १०८ ॥

पूर्वो भवो यदि न मा स्मृतिमेति विप्रो
दुर्मेधसः सकलशास्त्रमता प्रतीतिम् ।
विप्रा मया निगदिताः प्रथमं च आसीत्
दूरस्थतस्मणाग्निजसीमभूमिम् ॥ १०९ ॥

सर्वं इत्थोपकरणं स ददर्श तेस्यां
सिंह प्रचण्डपवनेन समंततोपि ।
मुक्त्यार्द्रचर्म अद्भरातिकरे क्षणेन
सर्वं शृगालयुगलं तदनंतरं च ॥ ११० ॥

दृष्ट्वा क्षणं तेदतिनिर्घृणचित्तवृत्तिः
कृत्या रती निजगृह स निनाय कोपात् ।
मूकस्य चास्य भवने ननु तिष्ठतस्ते
मापितृद्वयोर्वियमतो भवत प्रशस्य ॥ १११ ॥

मूकान्वय परमवे प्रपराभिधानो
विप्रो हठी समभवद्विनमकिसकः ।

१ यथासीदिमपि पाठः । २ प्रथ॰विप्र॰ । ३ मूनी । ४ सर्व । ५ सत॰स्मतस्पुर्य ।
६ मत्रो । ७ भवनयोः । ८ भोषरतो ।

दध्यौ तदा भृकुटिभीषणवक्त्रमेत्रौ
तौ दुर्नयात्मकमिमौ निशि दुष्टचेष्टौ ॥ १२९ ॥
योगीश्वरः सकलसत्त्वहितः समाना
मित्रे तथा रिपुजने सुखदुःखयोश्च ।
कुर्वे न तस्य यदि रक्षणमद्य साधो-
र्नूनं वृथा भवति मे वनपालकत्वम् ॥ १३० ॥
सूर्योदये जनपदैः सह संप्रधाय
कार्योनयोरनुरूपदुर्नयययोग्य एव ।
दण्डस्तदेति मनसातिविचार्य तौ च
संस्तम्य गुह्यकपतिश्च जगाम धाम ॥ १३१ ॥
इत्थोपसर्गमथतस्य मुनेरुदारं
क्वापि क्षपा सरमस्त समगात् विवेष ।
मातश्च तौ समवलोक्य तथातिरौद्रौ
धिक्कारवादमुखरा जनता निनिन्द ॥ १३२ ॥
उत्खातचण्डकरवालकरौ रिपू तौ
स्तंभभितौ परममेव निहन्तुमिष्टौ ।
तस्मादय सकलसत्त्वहितो मुनीना
धर्मोऽधुना शरणमस्तु भवांतरे च ॥ १३३ ॥
इत्थं च तौ च समवाप्य जनाच्च निन्दां
पुत्रौ स्थितौ पितृयुगं समवेत्य शोकात् ।
बाष्पाम्बुबिन्दुघनमौक्तिकतारहारं
हाहा सुतावितिं रुदत्समभाप तत्र ॥ १३४ ॥
साधोः क्षमाम्बुजयुगे पितरौ निपत्य
तौ तं समूचतुरथोमुखदीनदृष्टी ।
त्वं धन्य सर्वजनतातिगपुण्यसिद्धां
धत्त्वम्मतं सकलसत्त्वहितं प्रतीतम् ॥ १३५ ॥

तावन्मुनिः सपदि पूर्वगृहीतयोगो
विस्मितस्य किञ्चिदिव तत्क्षणमित्युवाच ।
यः प्रातिहार्यमकरोन्मम यक्षनाथः
प्रादुर्भवन्निह स मुञ्चतु विप्रपुत्रौ ॥ १३६ ॥

इत्युक्तवन्तमथ तं स जगौ यतीन्द्र
नाथास्य कोपमिह किं तव चिंतयेति ।
वीर्यं विना यदि जिघांसुरहं भवामि
युक्तं निपातयितुमत्र पुनर्न युक्तम् ॥ १३७ ॥

स्वर्गी मया निशि समस्य निवेशनार्थं
मामूलयात्र भगवन् समतापवादः ।
हन्तास्मि साम्प्रतमिमौ नियतौ मदान्धौ
हिंसेति सानुनयमेनमवक्त योगी ॥ १३८ ॥

अन्यच्च ते धनपते कथयामि साक्षी
मोक्षोऽनयोर्नियमतो जिननेमितीर्थे ।
श्रुत्वा वचो यतिपतेरिति तं प्रणम्य
विप्रौ प्रमुच्य धनदेन तिरोबभूव ॥ १३९ ॥

गत्वा सुकौतुकजनेन विलोक्यमानौ
साधुं प्रणम्य विधिपूर्वमवोचतां तौ ।
नाथ क्षमस्व दुरनुष्ठितमावयोर्यत्
बालाय जातु न हि कुप्यति साधुलोकः ॥ १४० ॥

क्षांतिः कृता ननु मया भवतोपि विप्रौ
लोके स्वकर्मवशवर्तिनि नैव दोषः ।
कस्यापि कश्चन युवामपि किं विधत्तं
कर्मैव कारणमशेषपरम्परायाः ॥ १४१ ॥

इत्यादि साधुवचनादुपलब्धतोषौ
बोधिं प्रपद्य सुमनसाविदमूचतुस्तौ ।

शान्तेः पदं गुणनिधिं तपसा प्रसूतिं
सर्वाङ्गसल्लक्षणविभूषितमीक्षणेयम् ॥ १४२ ॥
आर्या मुनेस्तव वपुः कथमीश हन्तुं
निःकारणं व्यवसितापति दुष्टचेष्टी ।
पुण्यं च तत्कथय नाथ परार्ध्यमुच्चै-
र्येनाथयोस्तव जिघांसमपापमोक्षः ॥ १४३ ॥

सम्यक्त्वमुज्ज्वलमणुव्रतपञ्चकं च
शिक्षा गुणव्रतमनूनमिदं हि पुण्यम् ।
श्रुत्वेति देशयतिधर्ममनेकमेव
नत्वा मुनिं जगदतुस्तमिमौ यथावत् ॥ १४४ ॥
श्रुत्वा प्रणम्य च पुनः पुनरेव साधुं
धर्मामृताम्बुनिधिमज्जनमाप्य तुष्टौ ।
कुप्यज्जिनिन्दितिपुष्पदोषलोके-
स्तावीद्विमौ गृहमथीयतुरुत्कबधू ॥ १४५ ॥

श्रीमज्जिनेन्द्रचरणाम्बुरजःपवित्र-
मूर्धास्त सोदरयुगं चिरमात्मगेहे ।
मिथ्यात्वकर्मवशगौ पितरौ तथास्तां
काले प्रयाति पितृयुग्ममथोपदिश्यम् ॥ १४६ ॥
हे बालकौ श्रुतिपथप्रतिपन्थिभूतं
किं साम्प्रतं जिनमताश्रयणं विधातुम् ।
नूनं गुरुद्वयममार्गरतं नितान्त-
त्रोपस्थिताविति विचिन्त्य मुनौ तदानीम् ॥ १४७ ॥
देशव्रतानि परिपाल्य विशुद्धदृष्टी
दानं चतुर्विधमनेकविधिं च दत्त्वा ।

---

१ पुण्यम् ।

कृत्वा जिनेन्द्रभवनेषु चिरं सपर्यां
संध्यासमाप्य विधिना दिवमापतुस्तौ ॥ १४८ ॥
तत्रोपपादशयने सुखजन्म लब्ध्वा
संगीतमुत्तममवेक्ष्य सुराङ्गनानाम् ।
तौ विस्मितौ किमिदमद्भुतमाधिपत्य
दास्याविमानपरिवारमुखादि चैतत् ॥ १४९ ॥
स्मृत्वा प्रागभवमार्हतमतफलं ज्ञात्वावधिज्ञानतः
सौधर्मेन्द्रसमोत्तमौ सुरवरौ तौ पञ्चपल्यस्थिती ।
सम्यक्त्वं प्रतिपद्य तुष्टमनसौ कल्याणिनामर्हतां
कुर्वाणौ महिमानमुत्तमतमं भक्त्या चिरं तिष्ठतः ॥१५ ॥

इति श्री सिन्धुराजसत्कमहामहत्तमश्रीपर्पटगुरो पण्डितश्रीमहासेनाचार्येण
कृते प्रद्युम्नचरिते पञ्चमः सर्गः समाप्तः ॥ ५ ॥

# षष्ठ सर्ग ।

अस्त्यत्र भारते वर्षे कोशलाविषयो महान् ।
स्वच्छाम्बरासमाकीर्णः स्वर्गलोक इवापरः ॥ १ ॥
भाति सस्तिसका यत्र सीमगा मद्भाम्पिता ।
साटकाननशोभिन्यः कामिन्य इव वाटिकाः ॥२॥
नद्यो यत्र विराजन्ते सहस्रांशुजलोचनाः ।
शाखा इव भुवः भाता देशार्सपदिदृक्षया ॥ ३ ॥
स्वस्थानि बहु सत्वानि गभीराणि स्थिराणि च ।
सरांसि यत्र राजन्ते मनांसीव महात्मनाम् ॥ ४ ॥
हंससमाः सरोजास्या गम्भीरावर्तनाभयः ।
चक्रवाकस्तना यत्र शोभन्ते सरिदङ्गनाः ॥ ५ ॥
पुण्ड्रेक्षुवाटसङ्कीर्णा सत्फलानप्रणालयः ।
चरन्गोपमसीमाना ग्रामा यत्र सुखे नृणाम् ॥ ६ ॥
निष्कलङ्कः सुवृत्तोपि कलावानपि न क्षयी ।
सुधामयोपि निर्दोषो यत्रगोऽपूर्वचन्द्रमाः ॥ ७ ॥
अयोध्यानगरी तत्र यथा दिव्यमरावती ।
सुरसार्थेन संपन्ना भाति सम्यसुराजया ॥ ८ ॥
यत्सौधशिखरारूढसुन्दरीवदनेन्दुभिः ।
ध्वस्ते तमसि भेदोस्ति न शुक्लतरपक्षयोः ॥ ९ ॥
हर्म्याग्रस्थाङ्गनागीतिहृताङ्गहरिणो विधुः ।
तत्सुधास्योपमानत्वं यस्यामायाति पार्वणः ॥ १० ॥
यत्रेन्दुमणिसोपानच्युताम्बुजलपूरिता ।
क्रीडावाप्यः प्रियापूर्णा यामिन्यां कुमुदोज्ज्वलाः ॥ ११ ॥

प्रातर्येव मुदा श्रीणां मुञ्चन् पद्मपिधा कराम् ।
 मैत्रोत्पलकदम्बानामागमाय सर्व एधि ॥ १२ ॥
तत्रारिञ्जयनामासीदस्यां पृथिवीपतिः ।
 चकार करिणीं गां यः प्रभुतामनपर्गुंफि ॥ १३ ॥
मातङ्गसङ्गसक्तोऽपि शुभानां मैथिलीमपि ।
 श्रीमन्नेमिस्मरोऽपि स तथापि सतां मतः ॥ १४ ॥
गुणोन्नति करोत्येव यदि भासामिरन्तरम् ।
 इति कम्पुव यो दोषर्मुमुच्च मानसैरपि ॥ १५ ॥
येन कल्पद्रुमणेव वितीर्णा मनसार्थिनाम् ।
 चिन्तामणिसमाजाताः प्राप्य तां सम्पदर्थिनाम् ॥ १६ ॥
प्रियवदा प्रिया तस्य बभूव गुणशालिनी ।
 रोहिणीव शशाङ्कस्य सती प्रीतिकरामिया ॥ १७ ॥
श्रेष्ठी समुद्रदत्तोऽस्य पुण्यपण्याऽमवरसुधीः ।
 मतिमत्सुगुणाधारः शुद्धयशास्त्रमुक्तमः ॥ १८ ॥
शङ्कादिदोषनिर्मुक्तो रत्नत्रयविभूषितः ।
 वैयावृत्यगुणात्मा सदागमविशारदः ॥ १९ ॥
तत्प्रिया धारिणीत्यासीत्लावण्यजलदीर्घिका ।
 सञ्चदा मञ्जुला भद्रा कामकोदण्डयष्टिवत् ॥ २० ॥
सौधर्मादेत्य गीर्वाणौ विशोत्तमवर्गे तयोः ।
 समभूतां सुतौ यमाम्बुराशीव भास्करौ ॥ २१ ॥
पूर्णभद्रस्तयोरायो माणिभद्रस्तथापरः ।
 कलाकलापसम्पन्नौ पूर्णचन्द्राधिवापरौ ॥ २२ ॥
सत्कुलाचितसम्बन्धौ स्वदारपरितुष्टौ ।
 जातौ तौ यौवनारम्भे जगन्मनमहोत्सवौ ॥ २३ ॥
कंचित्कालं रतौ धर्मे पुरुषार्थे च सादरम् ।
 भोगासक्तौ च तावच गतं कालं न जज्ञतुः ॥ २४ ॥

पदार्थान् मनुयान् केचित् मिथ्यामैवापरे जगुः ।
जीवतत्त्वं विना चान्ये पक्षमेकान्तिकं सृताः ॥ ३८ ॥
ज्ञानप्रमाणविज्ञानपुरुषाद्वैतवादिनः ।
पक्षमेकान्तमेतेऽपि श्रयन्ति न जातुचित् ॥ ३९ ॥
वैनयादिकमता ये ज्ञेयास्तेऽप्यर्थनामतः ।
संशयादिति मिथ्यात्वं तव भूप निवेदितम् ॥ ४० ॥
योग्यास्तु नामतो भेदा मिथ्यामोहस्य भूपते ।
परिणामकृता संख्या विपर्ययविरती मता ॥ ४१ ॥
तथाविरतयस्तस्य द्वादशाख्या महीपते ।
योगाः पञ्चदश प्रोक्ताः प्रमादाश्चापि तत्समाः ॥ ४२ ॥
पञ्चविंशतिसंख्याताः कषायाश्च जिनोत्तमैः ।
बन्धस्य कारणं कृत्स्नमेतद्रूपं निबुध्यताम् ॥ ४३ ॥
मोक्षोऽपि पार्थिवात्यन्तं विश्लेषो जीवकर्मणोः ।
दर्शनज्ञानचारित्रत्रयं तस्यापि कारणम् ॥ ४४ ॥
जीवादिसप्ततत्त्वानां श्रद्धानं दर्शनं मतम् ।
निसर्गाधिगमाख्यातं तच्च दर्शनं द्विधा ॥ ४५ ॥
क्षयाद्युपशमाख्यात् कर्मणामनुपाततया ।
प्रत्येकं तद्रूपं भेदा कथितं परमागमे ॥ ४६ ॥
सम्यग्ज्ञानं पदार्थानामवबोधः स पञ्चधा ।
मतिश्रुतावधिज्ञानं मनःपर्ययकेवलम् ॥ ४७ ॥
पापक्रियानिवृत्तिस्तु चारित्रं कथ्यते बुधैः ।
सामायिकादिभेदेन पञ्चधा तज्जिनागमे ॥ ४८ ॥
इत्थं संक्षेपतस्तस्य कारणं बन्धमोक्षयोः ।
निगद्य विरतः साधुः सतो हि मितभाषिणः ॥ ४९ ॥
कर्णाञ्जलिपुटैः पीत्वा सुरेशज्जीवसुतम् ।
प्रस्माह भूपतिः प्रीतः पुनस्तं मुनिपुङ्गवम् ॥ ५० ॥

यथापूर्वं मया ज्ञातं कारणं बन्धमोक्षयोः ।
प्रीतिश्च भङ्गुरा नित्यं संसारे सारवर्जिते ॥ ५१ ॥

देहो रोगशतापूर्णो यौवनं क्षणभङ्गुरम् ।
सुखं दुःखसमाक्रान्तं विषया विषसन्निभाः ॥ ५२ ॥

विभाव्येव भयाम्भोधेर्निर्विण्णोऽस्मि महामुने ।
दीक्षयानुग्रहं कर्तुं त्वमर्हसीह ममाधुना ॥ ५३ ॥

गुरोराज्ञां समादाय नृपो नृपतिभिः समम् ।
समस्तं सग्रथं हित्वा दीक्षां जैनेश्वरीं श्रितः ॥ ५४ ॥

निर्वेदारम्भपरः पुत्रः पश्चिमपतिरपि सती ।
प्रभूय सद्गनिमुक्तिसीपुमवयारिधिम् ॥ ५ ॥

अत्रान्तरे मुनिं नत्वा धर्मं श्रोतुमनाः पुनः ।
पप्रच्छतुः गृहस्थानां सोऽप्यवादीद्दयार्द्रधीः ॥ ६ ॥

पततो दुर्गतौ यस्मात्प्राणिनो धारयत्यसौ ।
तेनान्वर्थो जगत्येष धर्मः सद्भिर्निगद्यते ॥ ५७ ॥

आत्मधर्मचभूतानां द्वन्द्वं तस्य लक्षणम् ।
स च द्विधा जिनैरुक्तः सागारेतरभेदतः ॥ ५८ ॥

तत्र सागारिणां धर्मः सम्यग्दर्शनपूर्वकः ।
मतश्शीलोपवासः स्यात्साधुदानजिनार्चनः ॥ ५९ ॥

मिथ्यात्वसम्पत्ता नूनं मद्यरयेव स देहिनः ।
विपरीतावबोधा हि शक्तिः सयाधर्मधर्मयोः ॥ ६० ॥

नरस्तु दुर्लभो नूनं रत्नं रत्नाकरे यथा ।
तस्मान्मिथ्यात्वमुत्सृज्य सेव्यं धर्ममुत्तमम् ॥ ६१ ॥

स्वर्गसौख्यफलं स्वादु सर्वेन्द्रियसुखावहम् ।
धर्मद्रुमः फलत्येष सिक्तो दानवारिणा ॥ ६२ ॥

भीमे रणाङ्गणे धर्मो दुर्मेधकपथायते ।
नान्यते हि परे धर्मः पारावारे निमज्जताम् ॥ ६३ ॥

रक्षन्ति न रुषो मर्त्यं धर्ममेवऽपायिनम् ।
सम्पन्नमिव सद्माम क्षितपापाससन्ततिः ॥ ६४ ॥
धर्मपाथेयवान् भव्यः पान्थो नैवावसीदति ।
संसारकानने भीमे संभ्रमन् सततं सुखी ॥ ६५ ॥
नास्ति धर्मात्परो बन्धुर्नास्ति मित्रं ततः परम् ।
स्वामी च तत्परो नास्ति तद्धर्मे कुरुत मतिम् ॥६६॥
इति धर्मकथां श्रुत्वा गृहीत्वाणुव्रतान्यथ ।
सम्यक्त्वभूषितौ हर्षान्मुनिं नत्वा गृहं गतौ ॥ ६७॥
कुर्वाणावुत्तमां पूजां मन्दिरेषु जिनेशिनाम् ।
सत्पात्रेषु प्रयच्छन्तौ भक्त्या दानं चतुर्विधम् ॥ ६८ ॥
मनोभिवाञ्छितान् भोगान् भुञ्जानावथ लीलया ।
गतं न जज्ञतुः कालं निमग्नौ सुखसागरे ॥ ६९ ॥
अन्यदा वन्दितुं साधुं गच्छन्तौ पथि पश्यतः ।
शुनीसमेतचाण्डालं निष्कम्पाक्षावपेक्षितम् ॥ ७० ॥
तथापि तेष्वतिस्नेहास्फीतं चित्तमभूत्तयोः ।
जातिस्मरा सदा यस्मात्सत्परमा हि देहिनाम् ॥७१॥
गत्वाथ सविधे साधुं प्रणम्यावधिलोचनम् ।
शुनीचाण्डालयोः प्रीतिरावयोः किमहेतुका ॥ ७२ ॥
सोऽब्रवीद्भवतोर्भ्रातृभूतौ पितराविमौ ।
अग्निलासोमदत्ताख्यौ तृतीये पूर्वजन्मनि ॥ ७३ ॥
वेदधर्मरतौ नित्यं षट्कर्मपरायणौ ।
परिग्रहासक्तचित्तौ हिंसानन्दितमानसौ ॥ ७४ ॥
द्वेषार्तौ जिनमार्गस्य तस्थतुर्भीभयङ्करौ ।
मन्वानौ जातिदर्पेण जगत्कीर्तिं तृणोपमम् ॥ ७५ ॥
मृत्वा प्राप्तौ महादुःखं प्रथमं नरकावनिम् ।
पञ्चपल्यानि तस्यां च भुक्त्वा दुःखानि निर्गतौ ॥७६॥
तस्मात्प्रच्यावितौ ताविहामी बभूवतुः ।
कुर्वाते भवतोः प्रीतिं जन्मान्तरसमुद्भवाम् ॥ ७७ ॥

जैनमार्गतिरस्कारकालकूटविषद्रुमः ।
सिक्तो मिथ्यात्वतो येन फलत्ययाशुभं फलम् ॥ ७८ ॥
इति निश्चित्य सम्यक्त्व मुनिवाक्येन तौ तयोः ।
दापयामासतुर्धर्मं प्रेमकारुण्यसंगतौ ॥ ७९ ॥
लब्ध्वा धर्मं ततः श्रुत्वा पूर्वजन्मसुतादिकम् ।
शोकविस्मयपूर्णाङ्गो मातंगो मुनिमब्रवीत् ॥ ८० ॥
त्वत्प्रसादान्मया नाथ ज्ञातमात्मविचेष्टितम् ।
क्व भुक्तं च यत्पूर्वं मम सत्मयामया ॥ ८१ ॥
क्व जन्म तद्द्विजातीयं क्व च मातङ्गता शुनिः ।
इति संचिन्त्य चित्तं मे शोकेनातीव ताम्यति ॥ ८२ ॥
कोपशोकभयोन्मादमृत्युजन्मजरामयम् ।
संसराब्धौ न संसारं पुनर्येन तथा कुरु ॥ ८३ ॥
इत्युक्त्वासौ गुरोर्पार्श्वम् मासं सन्न्यस्य धीरधीः ।
नन्दीश्वरसुरो जातः पल्यायुः सुपरिच्छदः ॥ ८४ ॥
विनापि सत सम्यक्त्व सत्यमो सारमानसा ।
तत्पुरे नृपतेर्जाता कन्यका सुन्दराकृतिः ॥ ८५ ॥
निक्षेपाद्भूतभूपाले तोयात्तस्याः स्वयम्वरे ।
दृष्ट्वा नन्दीश्वरो देवस्तामवादीत्सुलोचनाम् ॥ ८६ ॥
जन्मद्वयानुभूतं किं तद्भुक्तं तव विस्मृतम् ।
क्रियते येन भोगेषु ममत्वमस्वात्मनो हितम् ॥८७॥
इत्यादिपूर्ववृत्तान्तमाकर्ण्यासौ सुरोत्तमात् ।
मनुष्याणीय सविप्रा काननं च प्रिय ययौ ॥ ८८ ॥
कथाप्रसङ्गतः प्रोक्त तमुदन्तमिह भूपत ।
प्रस्तुत मोऽप्यतस्तामिरिदानीं भेदिपुत्रयोः ॥ ८९ ॥
प्रतिपाद्य समौ कश्चिद्धर्मेण च सुखेन च ।
महत्त्वनो विधायान्ते सौधर्मकल्पमाश्रितौ ॥ ९० ॥

---

१ छवी । २ ययम् ।

यथा विपत्तमम्बुधयः समीप माहेन्द्रचापाम्यविरपुतिम ।
भवस्तकस्मात्परिपूर्णदेहास्तपोपपादे दिवि तावभूताम् ॥ ११ ॥

सुकृतवशतो भूत्वा देवौ महर्द्धिविभूषणौ
सुरगिरिशिखरेष्वावासेष्वनुष्ठितधर्मणौ ।
त्रिदशवनितावक्त्राम्भोजभ्रमरत्वमनुभवौ
सुखमनवरतं तस्मिन्देवौ चिरं तु चिराष्टकौ ॥ १२ ॥

इतिश्रीसिन्धुराजवत्सलमहामहत्तमश्रीपर्पटगुरोः पंडितश्रीमहासेनाचार्यकृते
प्रद्युम्नचरिते षष्ठ सर्गः ॥ ६ ॥

स प्रणम्य च जगाद नृपेशं नाथ प्रसीद कुरु वेश्म पवित्रम् ।
रूप्यपत्तनपुरे दिनमेकं स्थीयतां मित्रपदातिविभूतिः ॥ १२ ॥

सप्रसादमुपरुध्य कथञ्चित्प्रत्यपद्यत नृपः स तथेति ।
सोपि तत्क्षणरचितापणशोभं स्वं पुरं स्वयमवीविशदीशम् ॥ १३ ॥

बन्दिवृन्दकृतमङ्गलगाने तद्गृहे रचितचित्रचतुष्के ।
जातरूपदृढविष्टरभाजं पर्यपूजयदसौ सकलक्ष्मः ॥ १४ ॥

रूपनिर्जितरतिं तरलाक्षीं चन्द्रभासमिति रूढिमुपेताम् ।
तत्सुतामथ विलोक्य स विद्धो मन्मथस्य विशिखैः समभैषीत् ॥१५॥

लोकरुचिरमिममम्बुधिवेलापार्वण्याः समुदियाय शशाङ्कः ।
यत्प्रकान्तिसरसीसुतमिन्दुं वेद्मि शीतकिरणं मुखमस्याः ॥१६॥

अमुना कुवलयाः शरकाण्डैः कम्बुपद्मपल्लवलताकरिकुम्भैः ।
सामदेहविधिभिर्वेष्टितशोभैर्निर्ममे भुवमिमां परमेष्ठी ॥ १७ ॥

ईदृशी सुभगता न भवान्याः कान्तिरीदृगपि नेन्दुकलायाः ।
रूपमीदृगमरीषु न जातं किन्नरीषु वचनं च न हीदृक् ॥ १८ ॥

मानसस्य विधुरस्तु समस्याः कौमुदी स्मितरुचो मधुवाचः ।
वीक्षितस्य च सुधा कमलाक्ष्याः समपसमधाममर्मस्तु ॥ १९ ॥

कान्तवस्तुसमवायि विधातुः कौशलं परिणतिं गतमस्याम् ।
मन्मथातुरमनाः क्षितिपालस्तां विलोक्य समचिन्तयदेवम् ॥२०॥

जन्म तस्य सफलं स कृतार्थः पुण्यवान्स सुभगः स्मरतुल्यः सः ।
यस्य निर्वृतिनिकेतनमेषा चिन्तयन्निति जगाम निवासम् ॥२१॥

शून्यचक्षुरसितपक्षमुषितो वा दग्धमन्मनसि तद्विरहेण ।
तत्र तल्पमधिशय्य स तस्थौ संवृतोपि विवृतः सविशेषम् ॥ २२ ॥

देव किञ्च विहितापि विभूषा पूर्णयत्नरचितापि न रुच्या ।
किं यदि स्खलति सोपि रिपुस्ते मन्त्रिभिस्त्वभिहिते समवोचत् ॥२३॥

तात नैव रिपुणां गणनास्ति किन्तु नः स्खलति चेतसि तन्वी ।
कामभल्लिरिव यत्र विधात्रा प्रेयसी नृपतिहेमरथस्य ॥ २४ ॥

...गाद् सचिवो यदि युक्त कर्म कुसुमयत्र विस्तरम् ।
...समेव यदि तत्प्रतिपास्य कथनापि समयो नृपचन्द्र ॥ २५ ॥
...तमेति न यथा परिवारो रक्ष्यते च प्रविशन्नपवारः ।
...तां तथा तव पिधास्यति यद्यां बुद्धिकौशलयशोभ्रमणोऽयम् २६
...पयोपमिति तस्य वचांसि प्रत्यपद्यत नृपः सचिवस्य ।
...सप्रयात च ततः स कथञ्चित्सस्वरप्रिपतमामपिपमम् ॥ २७ ॥
...तपम् गिरितटानि महान्ति प्रापयंश्च विपिनानि विकाशम् ।
...पयश्च सरित सुगभीरा भूपतिः स रिपुदेशमवाप ॥ २८ ॥
...वेष्टिते सति बलै रिपुदुर्गे भीष्मयोधसमधिष्ठितमध्ये ।
वीरयपिजबलान्यथ भीमो निर्जगाम रभसा समराय ॥ २९ ॥
उल्लसद्ध्वजपताजितपक्षे प्रस्फुरद्विमलचामरफेने ।
शास्त्रवारितरिपुद्विपकुम्भप्रोल्लसन्मदकणमीक्षितकाभे ॥ ३० ॥
समहारगलितासमशीधे तुङ्गकुञ्जरशिरोध्वजदुर्गे ।
योधयातपतितैर्गजपादैर्यत्र कच्छपसमैः समभायि ॥ ३१ ॥
शास्त्रसूनपतिता गजहस्तास्तुल्यतामुपययुर्मकराणाम् ।
तत्र सागरसमे समरे द्राग् तं कथंचन विजित्य बबन्ध ॥ ३२ ॥
गम्रप्रमकशिरोमणिरश्मिप्रोतिताङ्घ्रिसरसीरुहयुग्मः ।
तत्र वैरि सचिवांश्चिनिवेद्य स्वां पुरीं प्रतिजगाम कृतार्थः ॥ ३३ ॥
मीतनीरभरपूरितमध्या निम्नगा मिळपदैर्घनपङ्काः ।
कुर्वता कृतसमुत्सवलोका कोशला नृपतिना समयायि ॥ ३४ ॥
...तां प्रविश्य विहितापणशोभां नागरं पुरमुदस्तपताकाम् ।
सोत्सवामिति निरस्तसुखचित्तो राजमन्दिरमवाप च शून्यः ॥ ३५ ॥
तत्र मङ्गमधुतानि विचित्र गीतमुद्गतकृपाः प्रमदाश्च ।
मामनानि शयनानि विभूषाः सप्तमस्य विपदामुपपातम् ॥ ३६ ॥
सपदो मुकुलयन् सहकारान् पुण्यपद्म वन वनराजीम् ।
मतरेम समयाप वसन्तः सास्मेयमभिव सतमध्य ॥ ३७ ॥

यामिनी प्रियतमाप कृशत्वं खण्डितेव शशिना दयितेन ।
वासरो मलयजा मधुरस्य तापशान्तिकृतये कृपयेव ॥ ३८ ॥
पङ्कजानि सरसीषु विरेजुस्तत्क्षणे विकसितानि सितानि ।
मन्मथस्य शिबिरे विजिगीषोरातपत्रवदिमानि समन्तात् ॥ ३९ ॥
कुड्मली विचकिलस्य सुगन्धौ षट्पदः कृतपदो विरराज ।
निश्चलो मधुरसासवलोभादिन्द्रनील इव मौक्तिकपूरे ॥ ४० ॥
कोकिलाकलकलस्वनरवेण मञ्जरीकलितमङ्गलगीतैः ।
दक्षिणेन मरुता गुरुणेव नर्तिताः शुशुभिरे वनराज्यः ॥ ४१ ॥
तेन तत्र तरवोऽपि बभूवुर्यैः समं न मिलिताः सुमनोभिः ।
तानि तत्र कुसुमान्यपि नासन् सेवितानि मधुपैर्न हि यानि ॥ ४२ ॥
हारहारघनसारसरोजैस्तालवृन्तकदलीदलवातैः ।
तद्वियोगजनितं परिवारो वल्लभामपि नुनोद न तापम् ॥ ४३ ॥
मालती मलयजं शशिबिम्बं पङ्कजानि घनसारमुशीरम् ।
विद्रुतस्य विरहे दयितायाः किम किम विपतां प्रतिपेदे ॥ ४४ ॥
शोकविह्वलमतौ परिवारे भूपतौ च विपदागमजातम् ।
आजगाम सचिवः समयज्ञः शङ्कितश्च समचिन्तयदेवम् ॥ ४५ ॥
आनयामि यदि हेमरथस्य प्रेयसीं नरपतेरयशः स्यात् ।
तां विना च न च कञ्चिदुपायं जीवितस्य विमृशामि कथंचित् ॥ ४६ ॥
यद्यपीदमुभयत्र विरुद्धं राजकार्यमतिकार्यमवश्यम् ।
तद्वसन्तमहमङ्गलहेतोरानयामि नृपतीन् सकलमान् ॥ ४७ ॥
कार्यमित्थमवधार्य स राज्ञः सन्निवेद्य च यथाविधिपूर्वम् ।
शासनं च विससर्ज समन्ताद्राजकार्यनिपुणो हि सुमन्त्री ॥ ४८ ॥
शासनं शिरसि तस्य विधाय सावरोधवनितं नृपचक्रम् ।
आजगाम सहसैव सतोषमभ्युवास च यथास्वनिवासम् ॥ ४९ ॥
सावरोधजनतो बहुभक्तिं प्राप काञ्चनरथोऽपि नरेन्द्रः ।
सोऽधिकं नृपतिनापि नृपेभ्यो गौरवेण ददृशे परमेण ॥ ५० ॥

निम्नमुन्नतमसावबलत्वं प्रावलञ्च विषमञ्च समञ्च ।
दुर्जनस्य सदृशेन समस्तं नीतमन्धतमसेन समत्वम् ॥ ६४ ॥

सन्निशातकरपाससमर्थे व्योम्नि तारकगणो विरराज ।
इन्द्रनीलमयभूतलकीर्णो मालतीसुमसमो प्रकरो वा ॥ ६५ ॥

सान्द्रमन्धतमसं विनिहन्तुं वाप्यमानमिव लोकमशेषम् ।
मार्गणानिव विशुद्धिसमेतांश्चन्द्रमा निजकरान् विससर्ज ॥ ६६ ॥

केतकीकुसुमकेसरपाण्डुर्ज्योत्स्नया धवलयन् सकलाशाः ।
मन्मथप्रमुदितस्तुहिनांशुर्दर्पणश्रियमुवाह निशायाः ॥ ६७ ॥

ज्योत्स्नयेति धवले भुवनान्ते प्राहिणोदपरपतिर्निजदूतीम् ।
सा विभूषणमिषेण मृगाक्षीं तां निनाय नरनाथनिकेतम् ॥ ६८ ॥

चाटुभिः सपरिहासवचोभिस्तां तथा समनुनीय स रेमे ।
जातमस्य च यथा चरितार्थं यौवनं च मदनो विभवश्च ॥ ६९ ॥

लोचनान्तकनिरीक्षणमन्तः कूजितं च हसितं च तदस्याः ।
चुम्बितञ्च विहुतञ्च रतञ्च व्याजहार सुरतोत्सवरागम् ॥ ७० ॥

गीतनृत्यपरिहासकथाभिर्दीर्घिकाजलवनान्तविहारैः ।
तत्र तौ रतिसुखार्णवमग्नौ जज्ञतुर्न समयं समतीतम् ॥ ७१ ॥

स्त्रीविरहवचनादथ वार्तां तां निशम्य नृपहेमरथोऽपि ।
वल्लभाहरणजादतिदुःखान्मन्मथप्रहरणाद्विमनोऽभूत् ॥ ७२ ॥

शून्यमेव हसति स्म च मोहं यात्यकारणमुपैति च गाढात् ।
कण्ठपीठविलुठत्स्वनमाप्य हा प्रियेति रुदिते च रुरोद ॥ ७३ ॥

कामदुर्ग्रहपिशाचवशेन सञ्चरन्नविषयः स परिभ्राम्यन् ।
हा प्रियेति रुदतापरिवार्यं भ्राम्यति स्म शिशुभिः परिवीतः ॥ ७४ ॥

धूलिधूसरशिरोरुहगात्रः स्कन्धलम्बितपटच्चरकन्थः ।
पत्तनं प्रतिपुरं प्रतिरथ्यं कोशलं प्रति जगाम स दैवात् ॥ ७५ ॥

तत्र पल्लमठमाहृतमुच्चस्थलमेतु धर्मं समधापत् ।
धावमानमपसार्य तथा तं धार्मिका शुभदृशः समरोधीत् ॥ ७६ ॥

बाष्पपूर्णनयनामतमकाण्डे तां विलोक्य सखी समपृच्छत् ।
वल्लभा नृपतिहृन्मरयस्य कथ्यतेऽस्य किमकारणमेव ॥ ७७ ॥
सा तदाग्रहवशाच्च कथञ्चिद्गद्गदस्वरमचीकथदेवम् ।
त्वद्वियोगजनितं दुरवस्थं वीक्ष्य पुत्रि रुदितं तव भर्तुः ॥ ७८ ॥
धात्रिकावचनमश्रुतपूर्वं सा निशम्य सहसैव चुकोप ।
युज्यते न कटुकं तव वक्तुमीदृशं मम सुदुःखविधायि ॥ ७९ ॥
पार्थिवेन्दुवदनस्तरसासौ दीर्घपीवरभुजो मम भर्ता ।
यस्य चाम्बुजरुचोऽपि नरेन्द्रशतानि सगिव मूर्धभिरङ्घ्री ॥ ८० ॥
रूपनिर्जितमनोभवकीर्तिस्तस्य किं पद नृपस्य वधायम् ।
इत्युदीरितवती निजपुत्रीं प्रत्यबोधयत तदा किल धात्री ॥ ८१ ॥
लक्षणानि च गतिं च यथासि पुत्रि सम्यगभिरूपय तावत् ।
तन्निरूप्य च तथेति विचिन्त्य सा निज प्रियतम विषसाद ॥ ८२ ॥
यावदास्त विनिगूढविषादं सान्द्रसौधशिखरे सह धात्र्या ।
तावदाप शरदागतशोभं वीक्षितुं क्षितितलं क्षितिपोऽपि ॥ ८३ ॥
पूर्वपरिक्षितिपतौ कुतुकेन गौरवं प्रकुपिताप्यवहत्सासौ ।
वीक्षितुं च शरदं सह देव्या सौधसप्तमतलं प्रतिपेदे ॥ ८४ ॥
शारदीं कुसुमवसत लक्ष्मीं यावदत्र नृपतिः सह देव्या ।
तावदेव विदितो मतिपूर्वं चण्डकर्मपुरुषः समबोधत् ॥ ८५ ॥
द्वारि देव परदाराभिषेवी कोऽपि तिष्ठति पुमान् तस्करः ।
तस्य दोषसदृशं वद दण्डमित्युदीर्य विरराम स चारः ॥ ८६ ॥
तन्निशम्य कुपितो नरनाथश्चण्डकर्मपुरुषं समबोधत् ।
क्षिप्रमेनमधिरोहय शूलं घातया किमिह दोषवतां नः ॥ ८७ ॥
देव किन्तु तमनेन यतोऽयं वध्यतेति तरुणोऽपि वराकः ।
तन्निशम्य वचनं निजपत्न्या नीतिवानिति जगाद नरेन्द्रः ॥ ८८ ॥
एष देवि परदाराभिषेवी वध्य एव हि विचिन्त्यपथेन ।
सा नरेश्वरमबोधयत दोषः कोऽपि किं परवधूहरणेऽस्ति ॥ ८९ ॥

यावदस्ति यदि तत्किमियाद् ध्यायमार्गविधुरापि हतास्मि ।
मर्मभेदिवचनं वनितायास्तन्निशम्य स जगाद विरागात् ॥ ९० ॥

गुरुपीवरघनस्तनभारात्सन्ति किं युवतयो न मनोज्ञाः ।
येन मोहवशगेन दुरन्तं कर्म दुरितमकारि मयैतत् ॥ ९१ ॥

प्रेयसी परिजनं च सुताश्च यौवनं च विषयाश्च धनं च ।
चञ्चलाश्च सुहृदश्च सुखं च जीवितं च न नृणां स्थिरमेतत् ॥ ९२ ॥

भावयन्निति यथाग्निमसारं भङ्गुरेषु विषयेषु विरक्तः ।
वासरान् कतिपयान् गृहवासे तस्थिवानपरयतिः स मुमुक्षुः ॥ ९३ ॥

अन्यदाथ वरपिण्डनिमित्तं चर्यया विमलवाहननामा ।
राजमन्दिरमवाप यतीन्द्रस्तं मुदा परमयाभूत भूपः ॥ ९४ ॥

प्रासुकं नृपतिना विधिपूर्वं श्रद्धयाथ वरदानमदायि ।
तेन चापफलतः सहसैव चित्रपञ्चकमवापि दुरापम् ॥ ९५ ॥

ध्यानभारधृतप्रतिपक्षो निर्ममः सकलजन्तुषु साधुः ।
तत्पुरोपवनमागमदाशु प्राप्तवान्स्वपरभोगविमुक्तः ॥ ९६ ॥

घातिदावमदहन्मुनिनाथो ध्यानपावकशिखाभिरशेषम् ।
तत्र केवलमतीन्द्रियमस्य देवदानवनुतं समभावि ॥ ९७ ॥

तं निशम्य सहसा वनपालात्तत्पदैकमनसा परितुष्टः ।
सावरोधजनः सह भूपैर्वन्दितुं तमगमन्नरनाथः ॥ ९८ ॥

तत्र भक्तिभरनिर्भरभूपो भव्यकैरवशशाङ्कमवेत्य ।
मेदिनीलुलितकुन्तलभारस्त्रिः परीत्य मुनिनाथमनंसीत् ॥ ९९ ॥

आशिषा भगवतानुगृहीतो भूतलेऽतिविनयादुपविश्य ।
मौलिकुड्मलितपङ्कजकोशः पृच्छति स्म यथावज्जिनधर्मम् ॥ १०० ॥

यं निषेव्य भविनां न हि दूरे
देवदानवनरेन्द्रसुभोगाः ।
दुर्लभं भवशतेष्वपि धर्मं
भूपतिं तमदिशन्मुनिनाथः ॥ १०१ ॥

तं निशम्य दुरवापमपुण्यै-
राजर्षभवचमसारमवेत्य ।
सन्निवेश्य च सुतं निजराज्ये
शिश्रिये स पदवीं श्रमणानाम् ॥ १०२ ॥

कैटभस्तदनुजः प्रियधर्मा
प्रेयसी मधुनृपस्य च पत्नी ।
इन्दुदीसितसहिता यत्पथा
शिश्रियुः श्रमणतामथ सर्वे ॥ १०३ ॥

उग्रतप्ततपसश्चिरकाल
शास्त्रसागरतट परमाप्ताः ।
ते समाधिमृतयः समभूव-
न्नच्युते दिवि सुराः सममेव ॥ १०४ ॥

इन्दुदीसितवयाम्मलिनस्य
कर्मणस्त्रिदशतामपहाय ।
रामताद्रिगिरिपत्तनराज्ञः
सम्बभूव तनया हरिनाम्नः ॥ १०५ ॥

अच्युते त्रिदशतां दिवि लब्ध्वा
पूर्वजन्ममधुभूपकलत्रम् ।
उत्तरेण रजताचलभागे
तत्खगेश्वरसुताजनि साध्वी ॥ १०६ ॥

अच्युते दिवि सुखान्यनुभूय
पूर्वजन्ममधुभूपचरो यः ।
रुक्मिणीतनुभुवो मदनोऽसौ
द्वारिकापुरि हरेस्तनयोऽभूत् ॥ १०७ ॥

यस्तु कैटभचरस्त्रिदशोऽभू-
दच्युते तदनुजः पुरपुण्यात् ।

श्रीपतेः प्रियसुतो गुणपार्श्वे
जन्मवत्सुखरतो भविता सः ॥ १०८ ॥

जन्ममृत्युसुखदुःखविचित्रां
संसृतिं समनुभूय चिरेण ।
धूमकेतुरसुरस्तपसाभूत्
कुत्सितेन भुवनेऽमरयोऽपि ॥ १०९ ॥

अन्यजन्मनि हृतेति मत्प्रिया
तं जहार पृथुक निर्मांसया ।
धूमकेतुरसुरः परं रुषा
भूप वैरमिति हेयमङ्गिभिः ॥ ११० ॥

इति नृपतिवरस्यो नारदस्तत्पुराण-
स्मरणसहजवृत्तं सर्वमेवं निशम्य ।
त्रिभुवनगुरुपादौ पूजयित्वातिभक्त्या
खचरमितपमाणप्राप्तकालोकनाय ॥ १११ ॥

गत्वा तत्र नगेन्द्रवेश्मनि चिरं दृष्ट्वा च तं बालकं
दत्त्वाशीर्वचनस्ततः प्रमुदितो द्वारावतीमाययौ ।
तस्यामङ्गजवार्तया प्रमुदितं कृत्वा मुनिः श्रीपतिं
शुद्धान्तं स विवेश तस्य जननीमाश्वासितुं रुक्मिणीम् ॥ ११२ ॥

श्रुत्वा तस्य जनान्मयापि च यथा रूपं च कामः सम
श्रीसीमंधरतः सदस्यधिगतं चिह्नं च तस्याग्रहे ।
रुक्मिण्या विनिवेद्य नारदमुनिः सर्वं यथावन्मुदा
कृत्वा तां सुतवार्तया प्रमुदितां दृष्ट्वा यथेष्टं ययौ ॥ ११३ ॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपर्पटगुरोः पण्डितश्रीमहासेनाचार्य-
कृते प्रद्युम्नचरिते सप्तमः सर्गः ॥ ७ ॥

---

# अष्टम सर्ग ।

अथ कालसम्वरखगेन्द्रगृहे
    जननैककैरवविकाशयिता ।
जनयन्प्रमोदमधिकं जगतो
    ववृधे स बालकविधुः शनकैः ॥ १ ॥
परिरक्षया खगपतेः सुकृती
    मदनोमितिवृद्धिमुपयाति यथा ।
समुपागमन्नमितशास्त्रगणाः
    सममेव सम्पदखिलापि तथा ॥ २ ॥
समवाप्य जन्मकुसुमास्त्रमियं
    जनितं च शैशवमतीत्य शनैः ।
सकलाः क्रमात्समधिगम्य कलाः
    समयाप यौवनमनङ्गशशी ॥ ३ ॥
सहसास्य सारमसमीक्ष्य तदा
    जनक प्रतीयुरथ ये कुपिताः ।
बलगर्विताः समरलब्धजयाः
    स जिगाय खेचरपतीन्युधितान् ॥ ४ ॥
विविधोरुविक्रमपवसमितामगणैः
    विधिताहिमद्युतिकरं नगरम् ।
समुपेयिवान्मनसिजो विजयी
    विदशाधिनाथ इव देवपुरम् ॥ ५ ॥
जयभूषितं समलोक्य नत
    तमय परं स परितुष्टमना ।

—

वितरीतुमस्य युवराजपदं
    नृपतिर्व्यवस्यत् सचिवानुमतः ॥ ६ ॥
प्रथमं वयेऽप्यवगमेन मया
    समदायि पुत्रसदृशः पुरतः ।
तव यौवराज्यममुना तु पुनः
    सकुतूहलः स्वयमपीह दिशे ॥ ७ ॥
मनसाभिवाञ्छितमवाप्य जनाः
    सकलार्थिनामुरु वितीर्य धनम् ।
उपराजमुख्ययुवराजपदं
    मदनाय सोत्सवमदान्नृपतिः ॥ ८ ॥
इति यावदास्त मदनः सुखितो
    नृपतेरवाप्य युवराजपदम् ।
कुपितः समाप्य वचनादचिरं
    खचराधिपेश्वरतनूजगणः ॥ ९ ॥
यमसन्निभे स्निग्धपानविधा-
    वपकारमीयुरतिदुष्टतमाः ।
मकरध्वजस्य पुरुपुण्यवशा-
    दरिभिः कृतापि विफलापकृतिः ॥ १० ॥
तमथान्यदा कुटिलवक्त्रमुखाः
    खचराधिराजतनयाः सदयाः ।
बहुधाभिमन्त्र्य विजयार्धगिरेः
    शिखरं निनिन्युरसमं कुटिलाः ॥ ११ ॥
शिखरे च तत्र शरदभ्रनिभं
    जिननाथसद्मवरचूलिमुखम् ।
त्रिदशेन्द्रवन्दितममितश्रियं
    प्रणिपत्य तस्थुरथ तस्य पुरः ॥ १२ ॥

प्रविविक्षोरस्य गोपुरमथास्य तदा
वदति स्म ताम्रशिखभृद्भुजगः ।
मनुजाः सदा वदति खेटजनो
विशतीह यः स भवताम्पुरुषः ॥ १३ ॥

तदहं विशामि भवतां पुरतो
गुरुगोपुरं खचरराजकृते ।
इति वाचमस्य विनिशम्य तदा
द्रुतमारुरोह मदनो कुटिलः ॥ १४ ॥

अभिवीक्ष्य तत्र च स पद्मनिधिः
क्षणमास्त यावदतिरम्यतमे ।
स्वपदोपमर्दभयकोपभरा—
त्सहसाविरास भयकृद्भुजगः ॥ १५ ॥

स जगौ च तं किमु मदीयपदे
कृतवान्पदं खल मदाधम रे ।
इति तस्य पन्नगपवाग्भिरसौ
मदनं युयुत्सुरभिकाममहिः ॥ १६ ॥

भृकुटीकरालितमुखारसन
रभसा विजित्य युधि तं मदनः ।
नतमौलिकुड्मलितहस्तयुग
मभिपृच्छदेवमिह कस्त्वमहे ॥ १७ ॥

भुजगो जगाद मुदितो मदन
पृथुगोपुरे सुचिरकालमहम् ।
स्थितिमासदामिह हि नाथ यथा
कथयामि ते सकलमेव तथा ॥ १८ ॥

अलकामिव पुरमिहास्ति गिरौ
विजयार्धनामनि जगत्प्रथितम् ।

समभूत्पतिः कनकनामनृपो
दयितानिकाम्य च बभूव मती ॥ १९ ॥

सुरतोत्सवामृतरसानुभव—
प्रतिसक्तयोः समभवत्तनयः ।
त्रिदिवाच्च्युतस्त्रिदिवनाथसमो
गुणवान् हिरण्य इति नाम तयोः ॥ २० ॥

राज्याधिपत्यमनुभूय चिरं
क्षणभङ्गुरं जगदवेत्य तदा ।
विषयेष्वसक्तहृदयः सहसा
तनयं नियुज्य निजराज्यभरे ॥ २१ ॥

विहितार्चनं मुनिपतिं विधिना
प्रणिपत्य सादरमवाप्य तपः ।
सुसमाधिपावकशिखाभिरसौ
परिदह्य कर्मवनमाप शिवम् ॥ २२ ॥

तनयः स्थितोऽस्य गुरुसौधतले
परिवारितो निजपुरन्ध्रिजनैः ।
गुरुसम्पदा विभवति दैत्यपतिं
स ददर्श यान्तमुरुसैन्ययुतम् ॥ २३ ॥

निमिषं विलोक्य खचराधिपते—
रुपमामतीतमथ मानधनः ।
अमुकं नियोज्य निजराज्यपदे
स विनिद्य सिद्धसदनं परमम् ॥ २४ ॥

ऋतुभिर्युताः स दशकमितय—
ममिताः समाः समधिसह्य तपः ।
पुरुरोहिणीप्रभृतिर्भगणं
विविधस्मसाम्य समभून्मदनः ॥ २५ ॥

स चकार राज्यमनुगान्तुमतः
समये मनेः पुनरपीह नृपः ।
मुनिता प्रियासुमथ मन्त्रगण—
समुपाश्च नः कथय नाथ विभुम् ॥ २६ ॥

इति स प्रसाद्यवचनान्मुदितः
प्रणिपत्य तीर्थकृतमाह मनिम् ।
विमलावबोध जगदेकपते
भविताऽस्य कः पतिरमेयगुणः ॥ २७ ॥

हरिचक्रनेमिजिनतीर्थभव—
समयो हरेर्मनसिजोऽस्य पतिः ।
भवतेति जैनमयथार्थ वचः
खचराधिपस्य समबोधविदम् ॥ २८ ॥

मणिगोपुराक्रमणगर्वभृतो
भव तस्य मन्त्रगण सेवयिता ।
इह तत्क्षणेऽस्य च नियोज्य स मां
मुनितामवाप्य च जगाम शिवम् ॥ २९ ॥

परिपाल्य मन्त्रगणकोशमिम
स्थितवानमेवमभिपन्तमहम् ।
मधुना समभ्य तव त विभिना
सममूत्य जम हतातिकती ॥ ३० ॥

मुकुटं वितीर्य मणिरत्नचित
समुपाश्च गोपुरपतिर्मदनम् ।
कथितस्तवैव ममितीयकृत्वा
तव किङ्करोऽस्मि यद् किं करवै ॥ ३१ ॥

इति त विलोक्य खचरेन्द्रसुताः
कणिना वितीर्य मुकुन्द चकिताः ।

रिपवो मिथः समवलोक्य भुजं
तमुदग्रं बिभिम्युरपि कालगुरुम् ॥ १२ ॥

अतिविप्रकृष्टमुपमिद्य ततो
भवनं समभ्युरिति भूपसुताः ।
अविचारमेव लघु यः कुरुते
स्वपमिपनस्तु लभते स पुमान् ॥ १३ ॥

अविशङ्कनीयमवधार्य वचो
महतो गुरोः गृहमिवातिमुदा ।
अथ वज्रपातमिव भीमतमं
पितताम तत्र किल तारटयम् ॥ १४ ॥

विनिशाम्य कर्णकटुमस्य रवं
रुधिरारुणाक्षियुगलोऽतिरुषा ।
दलितांजनच्छविरतीव महा-
नथ राक्षसाधिपतिराविरभूत् ॥ १५ ॥

परिपालिता मम भुजेन गुहा
किमु कर्णजाहमपि ते न गता ।
अपवित्रपादरजसा पवित्रा-
मपवित्रयस्यतिपवित्रतमाम् ॥ १६ ॥

परुषेण तस्य वचसेति भृशं
कुपितस्तमाह शितपत्त्रशरः ।
खल राक्षसाधम वदासि वृथा
कुलगायिकाः कुवचनं किमु रे ॥ १७ ॥

स्वयमप्यरस्त्वमसि चेत्कुरुपे
किमु नाकपातमविकम्पयिता ।
वचसा न पौरुषमिह क्रियया
क्रियते मनीषितु कुलमसौ ॥ १८ ॥

यमवेश्म काल समुपैतुमना
किमु रे पवित्थमभिमापयसे ।
इति कालराक्षसपतिर्वचनैः
परितर्जयन्नपि मनोजमगात् ॥ ३९ ॥

स तथा पतत्पतितया प्रसभ
विपमेषुणापि रुरुधे नितराम् ।
घनमुष्टिभिः कुलिशपातसमैः
करपीडयुद्धमभवच्च तयोः ॥ ४० ॥

युधि कालराक्षसपतिं स बली
परिघातबन्धननिपातकरैः ।
सकरैर्विधाय विमद सदय
स्ववशं निनाय मतमौक्तिकरम् ॥ ४१ ॥

विमलत्नुषारधमरक्षितयं
विशदातपत्रमसमं स तथा ।
वसुमत्र्कं स तरवारि ददौ
मकरध्वजाय परितुष्टमनाः ॥ ४२ ॥

इति पूजितं समवलोक्य तथा
कुसुमध्वजं नरपतेस्तमयाः ।
छलतोपकर्तुमतिभीमतमा-
मपरामनैषुरभिनागगुहाम् ॥ ४३ ॥

अतिदूरतः समुपविश्य ततो
न्यवदिष्ट खेचरतनूजगणः ।
भयदामिमां विशति यो मनुजो
लभते स शर्म यशसानुगतः ॥ ४४ ॥

वचनं निशम्य तदमीः सहसा
प्रविवेश तामहिपतेः स गुहाम् ।

रणकेलिना समवजित्य हठात्
    स्वयमेव चकार भुजेन मदनः ॥ ४५ ॥
मृदुचिरं भुजयतस्पुत
    करकेलकरी चरणपीठमयो ।
गृहकारिसम्पपरिरक्षकया
    सह विधया समवाप ततः ॥ ४६ ॥

इति सन्यकाममपकोऽन्य तदा
    समुपागत मकरकेतुमर्मा ।
मनु यापिकामय विनम्पुरम्नु
    मयदां तदीयासुररक्षणया ॥ ४७ ॥

जगतुम दूरमुपविश्य ततो
    विद्भाति योऽभिपयमन पुमान्।
जगतां पतिर्मुखमर्सा सुभगो
    मचितेति देवरजमोकिरियम् ॥ ४८ ॥

वपन तदीयमवयाय तदा
    अयवाम्बिदाङ्गुदयः सरसः ।
सरसीं गजेन्द्र इव यावदिमा-
    मवगाहते किल स पुष्पधनुः ॥ ४९ ॥

सितपुण्डरीकरजसारुणिता
    त्रिदशापगेव शुचिनीरभृता ।
यद नीचपेता कपमाः स्पृशता
    मलिमीकृतपमनुना ममता ॥ ५० ॥

स्वमनाम दुर्नयविपाकतरोः
    पमसस्य समभिदुरैकचमीः ।

---

१ मनोज्ञवीर्यं ।

इति तर्जितस्तदधिपेन तदा
बधसेव पञ्चविशिखोपि युधि ॥ ५१ ॥
कमनात्तसम्पत्तभयापनय
खचराधिपस्य तनयः सहसा ।
युधि त विजित्य समवाप्य ततो
मकरध्वज मकरकेतुरभूत् ॥ ५२ ॥
हुतभुग्निवासमथ कुण्डमगुं
सरसाङ्गजं समुपनीय जगुः ।
विशतीह यः स खलु वीरपति-
र्लभते यथाभिलषितं च नरः ॥ ५३ ॥
वचनं प्रपद्य स तयेत्यचिरा-
त्रिपदाग्गुशुक्षणिमपास्तभयः ।
अतितीव्रहेतिभिरपहेन जग-
त्परिदग्धुमुद्यतमिव ज्वलितम् ॥ ५४ ॥
हुतभुक्शिखासमभिलीढवपुः
स तपापभिष्य वहन क्षणतः ।
प्रकृतिस्थितात्सुरतः प्रणता—
च्छिखिपीतवस्त्रयुगमाप परम् ॥ ५५ ॥
अथ मेघसन्निभगिरिद्वितयं
समयोपनीय जगदुः कुटिलाः ।
अनयोर्य एति विवरं स जयी
समते च लाभमिति कृन्नवस्तः ॥ ५६ ॥
स पिताद्य कूर्परयुगेन गिरी
प्रविवेश तत्र खचरानुमतः ।
विजितेन मेघविदुषेण तदा
समदायि कुण्डलयुगं रुचिरम् ॥ ५७ ॥

गमितं च नूनमिह संविदार्ता
जगदाधिपत्यमपि हस्तगतम् ॥ ६४ ॥

विषमेषुरत्र किमु तद्वचनो—
ह्रियतिस्म चापगुरुधैर्यनिधिः ।
चलदञ्जनाचलमिमो रुषितः
सहसा दधाव तमभि द्विरदः ॥ ६५ ॥

चरणान्तरे करपुरो रदयो—
र्विचरंश्चकार विमद स गजम् ।
स च तं जगाद गतिपूर्वमिदं
तव काम कामवशगोऽस्मि सदा ॥ ६६ ॥

अथ साहसैकरसिकः सह तै—
रनु धामसूरमगमत्स युवा ।
उप तत्समगम्य जगदुः खचराः
स नृपोऽपरः समधिरोहति यः ॥ ६७ ॥

स तदा प्रधाव्य च तमाक्रमते
निजधामपातहतिकोपवशात् ।
भुजगाकृतिस्तमसुरोऽभ्यगम—
द्विजितः स पुष्पधनुषापि रणे ॥ ६८ ॥

क्षुरिकाम्बरस्तबकवाणि तदा
परमुद्रिकामपि ततः स ददौ ।
विलसन्मुखमुग्धवदनः सह तैः
स ततः सरोवरमसमग्रिमगात् ॥ ६९ ॥

समुपैति योऽत्र शिखर स पति—
र्भविता श्रियः खचरपाण्यपगः ।
समरोऽहरेनमथ सोऽपि तदा
विजितश्च बाहुयुधि तेन सुरः ॥ ७० ॥

वरकण्ठिकाङ्गदयुगं परमं
कटकद्वयं स कपिसूनुमतः ।
समवाप्य पञ्चविशिखोऽपि ततः
समगाद्वनामनु वराहगिरेः ॥ ७१ ॥

स विवेश तां त्वरयसत्वरसा
वनुमस्तमैक्षत वराहमुखा ।
समरे च तेन विजितश्च वशी
जयघोषशङ्खसुमनोपनुपी ॥ ७२ ॥

क्रमतः पयोधममवाप्य कृती
स्पर्शं मनोज्ञमिति विस्मयितम् ।
प्रसतो वसन्तकरणेन वद
स ददर्श तत्र सितमैकतरी ॥ ७३ ॥

महतां विपरस्तु विद्धितोपकृति-
र्यदासे भवेदिति नृपाङ्गसुधा ।
स विपाशितश्च तदैव यया—
पकारिर्न च विनियम्य ततः ॥ ७४ ॥

रिपुरेष देव मम दुष्टमना
परिभूय मामिति गतस्तरसा ।
तदहं भवन्तमुपकारपरं
गतवांस्त्वपाद्परिभाव्य विभोः ॥ ७५ ॥

तव किङ्करोस्मि वद किङ्करवा—
णिनि सम्मिगाय मदनाय ददौ ।
शुभविद्ययोर्द्वितयमित्यर्थ
च्युतनुस्वहारमपि खेचरपतिः ॥ ७६ ॥

सुरमार्गमभ्युदितविस्तरं
छयितां तयोरपि विधाय परम् ।

सितपीतनीलपरिभागवतीं
स्तनकेशपाशपिहितांसभुजाम् ।
सुखसौरभाढ्यपवरिमकुले—
रुपसेव्यमानवदनाम्बुरुहम् ॥ ८४ ॥

परिणाहिपीनकुचभारनता
जघनालसां स्तिमितपक्ष्मगतिम् ।
कलवल्लकीमधुरनादरवां
कलनीलकण्ठारिविलोलरवाम् ॥ ८५ ॥

निजरूपपीतजनकामिमनो—
हरणीं तृणीकृतजगत्त्रितयाम् ।
स विलोक्य विस्मयमवाप्य पुनः
परिचिन्तयामिति बभूव युवा ॥८६॥ कुलकम्

सवितुः प्रभा किमुत शक्रवधू
रजनीकरस्य किमु कान्तिरसौ ।
मकरध्वजस्य रमणी किमियं
भुवमागता ननु कुतोपि भवेत् ॥ ८७ ॥

सकलाकलापरचिनी च विधे—
र्जडता च सर्वसुभगा तरुणी ।
मदनो ध्रुव विजयनाम्निमया—
वसुरक्षणाय रमणीत्वमगात् ॥ ८८ ॥

उपवासशतैरिमुपार्य तपो
नविमं सुकुमारतरे सुखदा ।
कथमन्यथावरमपोडपमां
परितर्कये नियतमेवमहम् ॥ ८९ ॥

इह कान्तिभाक्निरुपमोपरता—
मिह सम्प्रतापि जगती विरला ।

इह सुन्दरीत्वमिमा वसति
इह मुद्रितश्च महिलामहिमा ॥ ९० ॥

भुवनत्रयप्रथितरूपगुणां
युवतीं स्थितां समभिभूय तदा ।
स विलोक्य तां मदयिता जगतां
परमुन्मनाः समभवन्मदनः ॥ ९१ ॥

अथ तत्क्षणादुपगत त्रिदशां
विदित वसंतकमपृच्छदसौ ।
किमु मीलने स्थिरसमाधिरता
तरुणी वने वसति कस्य सुता ॥ ९२ ॥

स जगौ प्रभवज्जलपोनिधि नृपो
दयितास्य भागिति तयोस्तनया ।
रतिनायिका कुसुमकेतुरते
यममाश्रिता तपति तीव्रतपः ॥ ९३ ॥

अवदातकर्मभिरतिप्रथितैः
स च दैव सर्वविदितस्त्वमसौ ।
अनुरूपसंगमविधानतया
सफलश्रमो भवतु विश्वसृजः ॥ ९४ ॥

इति पद्मजे वचनमस्य तदा
विनिशाम्य पुष्पधनुषा विधिवत् ।
सहसा कृतोपकरणः सरसं
रतिपाणिपीडनविधिर्विदधे ॥ ९५ ॥

सकलाधिवाससुरपादपता—
मरकामधेनुमथ पुष्परथम् ।
स वसन्तमुन्नतमवाप्य कृती
निजकीर्तया निरगमात्स वनात् ॥ ९६ ॥

ननु पूर्वजन्मनि तवैव कृत
    सुकृतं यथायमुदरेण धृतः ॥ १०३ ॥
रतिकामयोर्युगमनर्घ्यम परं
    विपरीतकृत तदधुनाऽऽत्मकथा ।
दयितेयमत्र ननु पुण्यवती
    सखि याम्य निर्वृतिकरी भविता ॥ १०४ ॥

शिथिलाम्बरान्वितकचाः सुदृशः
    स्रग्वपुस्तनाग्रपिहितकुसुमाः ।
कुचमण्डलात्त्रुटितहारलता
    मदन त्वयाद्युपविलोकयितुम् ॥ १०५ ॥
करकं श्रुतिमणिविहारलतां
    कटिसूत्रदामनि चकार परा ।
अथवा विमोहयति पञ्चशरो
    न हि वेत्ति काश्चिदपि योग्यपरम् ॥ १०६ ॥

तनयं विलम्ब्य परिपत्य तथा
    सितपुष्पसायकशरैः क्षतया ।
सुतन्वा कयाचिदपि पञ्चशरं
    प्रकटीसपत्नुपमर्दमपि कृतः ॥ १०७ ॥
इति पत्युपाद्रिमि पुरन्ध्रिजने
    नयकामदर्शनपिशाचवशे ।
विदधाति चेष्टितमनेकविधं
    प्रविवेश वेश्म नृपतेर्महतः ॥ १०८ ॥
स्मयकलापाशपिहिताक्षियुगं
    नमतिस्म पुष्पविशिखाः पितरम् ।
स च तं तदा विजयिनं मुदितः
    परिरभ्य मूर्धनि चुचुम्ब नृपः ॥ १०९ ॥

तदनन्तरं च जनकानुमतो
    नयवाञ्जगाम जननीनिलये ।
नतमौलिचुम्बितपदाम्बुरुहं
    विनयात्मजस्य निपपात पुरः ॥ ११० ॥
विनतस्य तस्य च विधीय मुदा
    जननी समाशिषमवैक्षत तम् ।
नवयौवनं सकलकामयुतं
    पयसीकृताभिमुखम पदासा ॥ १११ ॥
मृदुभङ्गुरायतसुनीलकच
    घनसारवासितविलोलधराम् ।
विधुबिम्बकान्तवदनं सुभगं
    पृथुवक्षसा विजितमेरुतटम् ॥ ११२ ॥
मृगराजमध्यमिभनाथगतिं
    कनकावदातवपुषं गुणिनाम् ।
सकलोपमानमिव येन कृतं
    विधिना ध्रुवं सुभगमस्य वपुः ॥ ११३ ॥
इति यावदस्य विकसन्नयनं
    वपुरीक्षते हतमनोनयना ।
अथ मर्मभेदिभिरनङ्गशरैः
    हृदि ताडिता खचरराजवधूः ॥ ११४ ॥
हिमसम्मिताम्बुरुहिणीमुखा
    विरहानलेन परितप्ततनुः ।
करपल्लवार्पितकपोलतला
    गलिताश्रु शोचितुमुपक्रमते ॥ ११५ ॥
नवयौवनं सदसि मानुगतं
    सकलाकला निरुपमो विमलः ।

विफलं भवेन्मम समस्तमिदं
　　यदि सेव्यते न हि मिया सुभगः ॥ ११६ ॥

मुखपङ्कजं मुकुलसुगन्धि यया
　　न हि पीयतेऽस्य सरसं सुदृशा ।
अथ हन्ति या प्रणयकोपवशा—
　　दपवसकैन च न त ममत्रा ॥ ११७ ॥

कृतगोत्रभेदपियशा रमण
　　कुपिता नियम्य सियमेन दृढम् ।
प्रणयोत्पलेन यदमाभिमुख
　　परिताड्य रोदिति न या सुचिरम् ॥ ११८ ॥

ममता न सा सुभगता वसति—
　　र्न चकास्ति सा यदुपुरन्ध्रिजनैः ।
इति यापदुत्सुकमनाः खचरी
　　सुचिरं विचिन्तयति कमयशात् ॥ ११९ ॥

मदनोऽपि तत्परमपङ्कजं
　　प्रणिपत्य तापदतिमुग्धमनाः ।
मुदितस्त्रीयमनसा सहितो
　　निजसौधमुप्मितपताकमगात् ॥ १२० ॥

निजधाम यादवतनयेन गते
　　स्मरसायकैः हतमनस्तनुः ।
विरहव्यथां न हि विषोढुमल
　　विगतत्रपा कृतविकारमरम् ॥ १२१ ॥

　　प्रथिमोन्नते कुचतटे विपशा
बहु जृम्भते शिथिलकेशपथा ।
　　सहसा विभूषणमपास्य च सा
व्यथया विभिन्दति विविग्नमनाः ॥ १२२ ॥

कुरुषे न चेत्सुभग नूनमियं
 रमणीहतिस्तव भवेद्विषमा ॥ १२९ ॥

रमयत्र निम्यमिति तद्वचनं
 स निशम्य कम्पितशिरो जगदे ।
अपि नैव चिन्त्यमिदमम्ब भवे—
 दभिमते किमु कुलप्रमदा ॥ १३० ॥

विषयाद्विलोम्य विनिवार्य मनो
 यतसे यतस्व कुलमार्गरता ।
इति मातरं समभिधाय मुहु—
 र्विनमस्थिरं मकरकेतुरगात् ॥ १३१ ॥

सकलश्रुताम्बुनिधिपारमितं
 परसागरेन्द्रमिषया प्रथितम् ।
स ददर्श तत्र मुनिसाधुनुतं
 परमावधीसममपास्ततमम् ॥ १३२ ॥

प्रणतिं विधाय च निषद्य पुरः
 समवाप्य चान्तरमुदारवचाः ।
स जगाद गोप्यमपि मातृमनः
 सविकारमात्ममनि मुनेः धनकैः ॥ १३३ ॥

समुपात्त तं यतिपतिर्मधुना
 भवतेयमन्यजननेऽपहृता ।
शशिरोचिरित्यभिधया प्रथिता
 तपसा च तेन समवाप दिवम् ॥ १३४ ॥

अनुभूय तत्र च सुखं सुचिरं
 सितिसिंधरस्य विजयार्द्धगिरौ ।
अवरोधरत्नमभवद्दयिता
 कनकमणिरित्यभिधयानुगता ॥ १३५ ॥

मधुरेण साकमनुभूय मधु
मदमूरुसमच्युतसुतः प्रथमः ।
मिषतश्चिमणीतनुमपोष्य यथा
रिपुणापहृत्य च गिरौ निहितः ॥ ११६ ॥

कनकप्रभा स्वमपलोक्य गिरौ
निजमद्भुतगुणतया च दधे ।
स्वतनूजकं समभिनीय पुरं
परिवर्धितः पुनरिहाद्भुतः ॥ ११७ ॥

तव पूर्वजन्ममपमोहवशा-
दपचितकामयमनङ्ग मुदा ।
परिहातुमिच्छति यतोऽम्बुपथ—
म्यसतो गृहाण च सुराशु ततः ॥ ११८ ॥

इति तत्त्वमेति विनिशम्य वचो
यतिनायकं सकलसत्त्वहितम् ।
स जगौ तदन्त जननीविरहः
समभूत्कुतः कथितो वद मे ॥ ११९ ॥

वसुधापुरन्ध्रितिलको विषयो
मगधाभिधोऽस्ति सदनेन महान् ।
बहु सस्यवत्र कलमाभिगमो
मगधानवोचत तदा मदनम् ॥ १२० ॥

पतिरस्य भूपतिसमृद्धियुतो
द्विजसोमदेव इति नामधरः ।
श्रुतिमार्गधर्मकुशलकमतिः
कमलाभिधास्य च बभूव वधूः ॥ १२१ ॥

गुणरूपयौवनविभूतिकला—
कुलजातिगर्वतृणतुल्यजगत् ।

स्फटिकाम्बुनिर्मलतमेऽम्बुतले
निजरूपदर्शनपरास्त मुदा ॥ १४२ ॥

कृतमासपारणमपारगुण
मलदिग्धकायमकषायमुनिम् ।
गृहमागतं प्रवरपिण्डकृते
मुकुरं स्वबिम्बितमपश्यदसौ ॥ १४३ ॥

विमलाक्षमपि विजितकामरिपुं
प्रतिबिम्बितं समवलोक्य तदा ।
कुपिता विनिन्द्य बहुधा कलिलं
समुपार्ज्य कुत्सिततनुः समभूत् ॥ १४४ ॥

गुरुकुष्ठतः कुथितदिग्धवपुः
प्रविवेश सप्तमदिने दहने ।
बहुधार्तचिन्तनपरा विवशा
मृतिमाप्य निन्दितखरी समभूत् ॥ १४५ ॥

गृहसूकरी तदनु सा च मृता
गुरुदुःखजाः समभवच्छुनी ।
सुतमोहतो स्वजनमेत्य तदाऽ
मृत सातिदुःखितवपुः समता ॥ १४६ ॥

नियम च मेकपदपूर्वपदे
समभूच्च धीवरकुले तनया ।
अतिपूतिगन्धिरभवद् दुरितै—
र्निजगन्धतः परिहृता स्वजनैः ॥ १४७ ॥

सुरनिम्नगातटवटस्य तले
कृतजीर्णपर्णशतरम्यगृहे ।
उडुपेन तारिततितीर्षुजना
पितृपोषणेऽस्ति निपुणास्त च सा ॥ १४८ ॥

इति यावदत्र कतिचिद्दिवसा—
    न्ययतिष्ठ सा परमपुण्यमहा ।
चिरजीवितः किल स एव मुनिः
    समवाप तावदथ योगनिधिः ॥ १४९ ॥

हिमवत्सुतुङ्गसहतरे शिशिरे
    दिवसात्यये वटतरोः सविधे ।
विजिताब्जजोऽप्रतिमधैर्यनिधि—
    रीदृशे स्थितः प्रतिमया स तदा ॥ १५० ॥

शिशिरानिलाहतिसहिष्णुममुं
    महाकायपद्मवमवेक्ष्य तदा ।
कृपया च सास्य परजीर्णवर्ध—
    मरुणी पिधाय निजगेहमगात् ॥ १५१ ॥

अथ तां प्रभातसमये प्रणतां
    परिपूर्णयोगनिधिराह मुनिः ।
हिमवत्तमे शुभतमे तनये
    कमलामिये तव परं कुशलम् ॥ १५२ ॥

विजितात्म्य नाम मुनिनोक्तमसौ
    समचिन्तयच्च किमिदं न मया ।
श्रुतमास्त यावदिति तावदमू—
    त्स्मृतपूर्वजन्मकृतकर्मफला ॥ १५३ ॥

भगवन्मुने कथमहं विदिता
    मपि ते कृतागसि कुतः करुणा ।
अपकारकेष्वपि भवत्यथवा
    सदये मनो मुनिजनस्य परम् ॥ १५४ ॥

किमु जातिहीनमधुजत्वमिता
    करवै विभो कथय मेऽद्य गतिः ।

इति साधुलोचनमिमां वदतीं
पतिराह साध्वि भव धीरमतिः ॥ १५५ ॥

निजकर्मणामिह सदा प्रभाव—
स्त्वनुभाव्यता भवति पुंसि तथा ।
किमु शोच्यते त्वमधुना तु शुभे
यदि धर्ममेव हि विधेहि परम् ॥ १५६ ॥

जिनमार्गसाधुषु कृतापकृतेः
फलमित्यवैत्य भव शान्तमनाः ।
इति तां विनीय स जगाम पतिः
नगरं च कोशलमपापविधम् ॥ १५७ ॥

नगरे च तत्र जिनमार्गरतां
विषयेष्वसक्तहृदयां परमाम् ।
गणिनीमवाप्य चिरकालमसौ
विधिना निनाय गृहधर्मरता ॥ १५८ ॥

विविधैस्तपोभिरतिघोरतरै—
स्तनुतां गता च परपाकगृहम् ।
अपि हमरापरगुहाविवरे
मृतिमाप्य षोडशदिवं समगात् ॥ १५९ ॥

त्रिदशाधिपस्य रमणीत्वमिव
समवाप तत्र गुरुपुण्यवशात् ।
चिरकालतश्च्यवनमेत्य ततः
समभूच्च कुण्डिनपतेर्दुहिता ॥ १६० ॥

वररुक्मिणीत्यभिधया प्रथिता
यमघोषमाप च सजातिरवात् ।
सहसानुरक्तहृदयाथ ततो
हरिणा हृता युधि निहत्य रिपून् ॥ १६१ ॥

तनयस्तयोर्गुणनिधिस्त्वममूः
शिशुपालकस्य च यतोऽन्यमत ।
कृतवान् यथा किल वियोगवतीं
जननीं वियोगमगमस्त्वमतः ॥ १९२ ॥

इति तन्निशम्य यतिनायवचो
मुदितः प्रणम्य च स तत्कुशलः ।
जननीगृहं समगमच्चरितं
कृतसत्क्रियश्च निषसाद पुरः ॥ १९३ ॥

तमसौ निशाम्य परितुष्टमना
वदति स्म काम यदि मे कुरुषे ।
वचनं ततो नियममेव विधे
पुरतोद्रिणीप्रभृतिमन्त्रगणम् ॥ १९४ ॥

किमु ते कदाचिदपि तन्वि वचो
न कृतं यदेवमतिमानवतः ।
गुरुविषयका विहर देवि तत—
स्तव किङ्करोऽस्मि यत आमरणात् ॥ १९५ ॥

निनिशाम्य सा वचनमस्य तथा
विनयानताय मदनाय परम् ।
वरविद्यकाद्वयमदाद्विधिना
परितोषमाप्य च जगाद स ताम् ॥ १९६ ॥

गिरिकन्दरेऽतिविषमे रिपुणा
पिहितस्य नो मम तदा सविधे ।
जननी न चापि जनको शरणं
शरणं त्वमेव ननु नास्त्यपरः ॥ १९७ ॥

भवपस्य यच्च करणीयमिति
प्रतिपाद्य तां निजनिकेतमगात् ।

समवेक्ष्य यच्चितमपास्य शठा
समचिन्तयद् सुतमपायमशुभम् ॥ १६८ ॥

करजैर्विदार्य कुचकण्ठकरा—
वपमाम्बुपीतगुरुहारलता ।
मतिदुःखिता किल विकारवशा—
प्रवदति स्म सा पतिमुपस्य कृपा ॥ १६९ ॥

परिपालनाय भवतैव धमे
शिशुरर्पितः करुणया मम यः ।
विहितस्तवैव च सुवेशपदे
प्रविलोकितास्य करणीयमतः ॥ १७० ॥

कुशलस्य चेदमहमस्ति विभो
किमपास्यतेऽधिपतमेव जनैः ।
तव पुण्यतश्च निजदीक्षमिव
परिरक्षितं कथमपीह विभो ॥ १७१ ॥

मम जीवितेन किमु नाथ परं
तव सुखधामसमूहतमोः ।
यदि जीव्यतेऽस्य न शिरःकमल
रुधिरारुण चरणपीठतले ॥ १७२ ॥

इति बहुमोहमवधार्य नृप—
स्तनयाप्रचण्डमनसो निरूतम् ।
निजगाद दुष्टतमकाममनु
नमताविचारमधुना नियतम् ॥ १७३ ॥

समचिन्तयस्त्वदपि चापचितं
सुदितास्तवेति सहसैव कथाः ।
जनतापवादचकिताश्च ततः
पृथुपापिकामसु विनिर्मुक्तम् ॥ १७४ ॥

उपनीय तत्र किल यामकिमे
    कृतसंनिधिरो जगदिरे मदनम् ।
अयनञ्न्य तावदिदं कथित
    हितपियया ललितमञ्जनकम् ॥ १७५ ॥

असकेलिमञ्जनविधायक तां
    सहसा वियुज्य निजवेश्मपरीम् ।
रिपुर्महर्तविधिविप्रुमरितं
    न तिरोदधे द्रुतमहाक्रमणः ॥ १७६ ॥

गुरुमादपूरितककुप्विवरं
    मदनः पपात पयसि प्रथमम् ।
निपतं रिपुं मपत तूर्णमहो
    पतिता पदन्त इति तेपि जल ॥ १७७ ॥

रिपुरभ्यमीरुत्क्रमवेगतया
    पृथुवातिवर्गा स पिदधे रुपदा ।
शरकंदयथ विपरीतशिरा—
    स्तदधो रिपून् प्रसभमार्तरवान् ॥ १७८ ॥

कपविश्य तत्र गुरुपर्यनिधिः
    प्रतिधाय पुष्पमयमीशसुता ।
कथयेति सापि निजगाद तथा
    चकितः कृपा नरपतिः स यथा ॥ १७९ ॥

रथकंपपर विरिपतीन्द्रमय
    समर्पस्तुरङ्गमगुराप्छरणम् ।
सकलं जगत्करविद्यानजवेः
    स्मगयम्यगतिनिबद्धा धराम् ॥ १८० ॥

---

१ स्वसमुद्रेव । २ हरितमदनम ।

